**कालिन्दी सलिले च तत्कुचतटी कस्तुरिका पङ्किले,**
**स्नायं स्नायमहो कुदेहजमलं जह्यात्कदानिर्म्मलः॥६०॥**
**पादस्पर्शरसोत्सवं प्रणतिभिर्गोविन्दमिन्दीवर,**
**श्यामं प्रार्थयितुं सुमञ्जुलरहः कुञ्जांश्चसन्मार्जितुम्।**

---

यद्वा विदग्धेन श्रीकृष्णेन सहितं मया दर्शितं पथं प्रति कथं न यासि इति आलपन्, च तत्कुचतटी कस्तुरिका पङ्किले कालिन्दी सलिले-तस्याः श्रीराधायाः कुचप्रान्तभागे या लग्ना कस्तुरिका तस्याः पङ्कयुक्ते श्रीयमुना जले स्नायं स्नायं-पुनः पुनः स्नानं कुर्वन् निर्मलः सन् अहो ! कुदेहजमलं-कुत्सितः योदेहः तत्र लग्नंयन्मलं तं, कदा जह्यां-त्यजे॥६०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे रसिकदायिनि ! एकं मुख्यंरसं मधुररसमेवदानकर्त्रि। प्रणतिभिः पादस्पर्शरसोत्सवमिन्दीवरश्यामं श्रीगोविन्दं प्रार्थयितुं-प्रणतिभिः य पादस्पर्शस्तस्मिन् यो रस स्तस्यैव उत्सवः आनन्दमय-व्यापारः यस्य तं इन्दीवरश्यामं श्रीगोविन्दं प्रार्थयितुं, तं स्वयं प्रार्थना कथं कर्त्तव्या तस्मान्मद्द्वारैव भवतु इति भावः। च सुमञ्जुलरहः कुञ्जान् सम्मार्जयितुम्-सुन्दरान् रहसः अन्य प्रवेशानर्हान् कुञ्जान् सम्मार्जयितुं, च माल्यचन्दनगन्ध-पुररसवत्ताम्बुलसत् पानकान्यादातुं पुष्पमालिका चन्दनञ्च पञ्चविध-गन्धपूर्णं रत्नपात्रं सुरसालानि ताम्बुल वीटिकानि च स्वादु सुगन्ध शीतलानि पानीय द्रव्यानि तानि आदातुं रहः कुञ्जं

---

प्रान्तभाग लग्ना कस्तूरी पङ्क से पङ्किल श्रीयमुना में स्नान करते-करते निर्मल होकर मैं कब कुदेहजमालिन्य का त्याग करूँगी ?॥६०॥ हे रसैकदायिनी ! प्रणति के द्वारा आपका पादस्पर्श जिनका रसोत्सव है, उन इन्दीवर श्याम श्रीगोविन्द की प्रार्थना करने, सुन्दर रहः कुञ्ज समूह की सम्मार्जन करने एवं माला, चन्दन, गन्धपात्र, सुरसाल ताम्बुल, स्वादु पानीय द्रव्यादि विलासोपकरण समूह का आनयन केलिकुंज में करने के लिए मैं

**मालाचन्दन गन्धपूर रसवत्ताम्बूल सत्पानका,**
**न्यादातुञ्च रसैकदायिनि तव प्रेष्या कदा स्यामहम्।।६१।।**
**लावण्यामृतवार्त्तया जगदिदं संप्लावयन्तीशर,**
**द्राका चन्द्रमनन्तमेव वदनज्योत्स्नाभिरातन्वती।**
**श्रीवृन्दावन कुञ्जमञ्जु गृहिणी काप्यस्ति तुच्छामहो,**
**कुर्व्वाणाखिलसाध्यसाधनकथां दत्त्वा स्वदास्योत्सवम्।।६२।।**
**दृष्ट्या यत्र क्वचन विहिताम्रेड़ने नन्दसुनोः,**
**प्रत्याख्यानच्छलत उदितोदारसङ्केतदेशा।**

---

प्रति प्रापयितुं तव प्रेष्या-प्रेरणयोग्यादासी, अहं कदा स्याम॥६१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो-विस्मये ! लावण्यामृत वार्त्तया जगदिदं संप्लावयन्ती-लावण्यमेवामृतं तद्युक्ताया वार्त्ता तथा इदं जगत् संप्लावयन्ती या सा, वदनज्योत्स्नाभिः शरद्राकाचन्द्रमनन्तमेव आतन्वती-स्ववदनचन्द्रिकाभिः शारदीय पूर्णचन्द्रं अनन्तमेव विस्तारयन्ती या सा, कापि-अनिर्वचनीया, श्रीवृन्दावन मञ्जुकुञ्जगृहिणी-श्रीवृन्दावने यानि मञ्जुकुञ्ज गृहानि तेषां गृहिणी गृहकर्म्मकर्त्री अधिष्ठात्री वा, अखिल साध्य साधन कथां तुच्छां कुर्वाणा स्वदास्योत्सवं दत्त्वा अस्ति॥६२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे कितव ! हे धूर्त्तेन्द्र ! हे वञ्चक ! हे धूर्त शिरोमणि ! नन्दसूनोः दृष्ट्या, त्वमेव नन्दनन्दन स्तस्यापाङ्ग दृष्ट्वा, यत्र क्वचन

---

कब आपकी प्रेष्या-प्रेरणयोग्या दासी बनूँगी ? ॥६१॥ अहो ! लावण्यामृत के द्वारा जो इस जगत् को संप्लावित कर रही है एवं जिनकी वदनचन्द्रिका अनन्त शारद पूर्ण शशि की सुषमा का विस्तार कर रही है, उन श्रीवृन्दावन की मञ्जुकुञ्जगृहिणी श्रीराधा, अखिल साध्यसाधन कथा को तुच्छ कर निज दास्योत्सव प्रदान कर विराजित हैं॥६२॥ हे कितब ! हे धूर्त्त शिरोमणि ! नन्दनन्दन!

**धूर्तेन्द्र त्वद्भयमुपगता सा रहोनीपवाट्यां,**
**नैका गच्छेत् कितवकृतमित्यादिशेत् कर्हि राधा।।६३।।**
**सा भ्रूनर्त्तनचातुरी निरुपमा सा चारुनेत्राञ्चले,**
**लीलाखेलन चातुरी वरतनोस्तादृग्वचोचातुरी।**
**सङ्केतागमचातुरी नवनव क्रीड़ाकलाचातुरी,**
**राधायाजयतां सखीजन परीहासोत्सवे चातुरी।।६४।।**

---

विहिताम्रेड़से प्रत्याख्यानच्छलतः उदितोदार सङ्केत देशा-यत्र क्वापि रचितं यत् प्रार्थनां द्वित्रिवारं तस्य प्रत्याख्यानं छलतः सूचितोदार सङ्केतस्य देशोयया, सा राधा रहोनीपवाट्यां-निभृत कदम्बकुञ्ज-वाटिकायां, त्वद् भयमुपगता-त्वदीय वञ्चनभयप्राप्ता, एकानैव-गच्छेत् इतिकृतं कर्हि मां आदिशेत्? ॥६३॥ मन्दाक्रान्ताम्बुधि रसन गै र्मो भ नौ गौ ययुग्मम्॥

राधायाः सा निरुपमा भ्रूनर्त्तन चातुरी-भ्रूधूनन चातुरी, सा चारु नेत्राञ्चले लीला खेलन चातुरी-चारु अपाङ्गदर्शन चातुरी, वरतनो स्तादृग्वचश्चातुरी-वरतनोः वराश्रेष्ठा तनुर्यस्य स नागरवरः श्रीकृष्णस्तस्य यद्वाग्वैदध्यं तादृग् वचन चातुरी सा, नवनव क्रीड़ा-कला चातुरी-सङ्केतेनैव स्वस्य तस्य च अभिसारे या चातुरी सा, नवनव क्रीड़ाकला चातुरी, नित्याभिनवाया केलि स्तस्याः कलावत् वर्द्धनशीला यच्चातुरी सा क्रीड़ा कलायाः चातुरी वा, च सखीजन-परीहासोत्सवे चातुरी सखीजनेन सहयत् परीहासोत्सवस्तस्मिन्

---

निज अपांगदृष्टि के द्वारा संकेत स्थान को सूचित करने से, उसका प्रत्याख्यान कर उदार संकेत स्थान का निर्देश करती है, वह श्रीराधा निभृत कदम्ब वाटिका में आपकी वञ्चना की आशंका से एकक नहीं जा सकती हूँ, अतएव अनुचरी रूप में कब मुझको साथ जाने का आदेश करेंगी ? ॥६३॥ आहा ! श्रीराधिका की वह निरूपमा भ्रूनर्त्तन चातुरी, चारु अपांग दर्शन चातुरी, वरतनु

**उन्मीलन्मिथुनानुराग गरिमोदार स्फुरन्माधुरी,**
**धारासारधुरीण दिव्यललितानङ्गोत्सवैः खेलतोः।**
**राधामाधवयोः परं भवतु नश्चित्तेचिरार्त्तिस्पृशोः,**
**कौमारे नवकेलिशिल्पलहरी शिक्षादिदीक्षारसः॥६५॥**
**कदा वा खेलन्तौ ब्रजनगर वीथिषु हृदयं,**
**हरन्तौ श्रीराधा ब्रजपति कुमारौ सुकृतिनः।**

---

यच्चातुरी सा, जयताम्–सर्वोत्कर्षेण सर्वोपरिवर्त्ततु इत्यर्थः॥६४॥ शार्दूलविक्रीड़ितम्॥

उन्मीलन्मिथुनानुरागगरिमोदारस्फुरन्माधुरी धारासार–धुरीण दिव्य ललितानङ्गोत्सवैः खेलतोः–प्रफुल्लन् युगलानुरागस्य यद्गौरवं तस्य उदार स्फुरन् माधुरी देदीप्यमाना यन्माधुरी तस्याः धारासारः धारासम्पातः तस्य यः धुरीणः धुरन्धरः स एव दिव्य ललितानङ्गः अप्राकृतः ललित कन्दर्पः तस्य ये उत्सवा स्तैः क्रीड़तोः, चित्ते चिरार्त्ति स्पृशोश्च–चित्ते दीर्घकालार्थ मार्त्ति स्पर्शः ययोः तयोः राधा माधवयोः नवकेलि शिल्पलहरी तस्याः याशिक्षादि परस्परमुपदेशादि तत्र या दीक्षा अनुष्ठानं तत्र यो रसः उन्नतोज्ज्वलः रसः, न, अस्माकंसम्बन्धे परंश्रेष्ठः भवतु॥६५॥शार्दूलविक्रीड़ितंवृत्तम्॥

ब्रजनगर वीथीषु खेलन्तो–वृषभानुपुरः नन्दवसतिश्च तयोः नगरयोः वर्त्मसु क्रीड़न्तौ, सुकृतिनः हृदयं हरन्तौ–बहु सौभाग्यवतः

---

श्रीकृष्ण की वाग्वैदग्धी की भाँति वचन चातुरी, सङ्केतागम चातुरी, नव नवकेलिकला चातुरी एवं सखीगण के साथ परिहासोत्सव में जो चातुरी वह सर्वोत्कर्ष से विराजित हो॥६४॥ जो उन्मीलित युगलानुराग गरिमा की देदीप्यमाना माधुरीधारासारधुरन्दर दिव्य ललितकन्दर्प उत्सव के साथ नित्य क्रीड़ाशील हैं, अथच चित्त में चिर खेदान्वित हैं, उन श्रीराधामाधव के कौमारकाल में भी जो नित्याभिनव केलिकला चातुर्य्य लहरी की शिक्षादि दीक्षारस है, वह हम सभी के लिए परावधिस्वरूप हो॥६५॥ जो सुकृतिजनों के

**अकस्मात् कौमारे प्रकट नवकैशोर विभवौ,**
**प्रपश्यन् पूर्णः स्यां रहसि परिहासादि निरतौ।।६६।।**
**धर्म्मिल्लं ते नवपरिमलैरुल्लसत्फुल्लमल्ली,**
**मालं भालस्थलमपि लसत्सान्द्रसिन्दूरबिन्दु।**
**दीर्घापाङ्गच्छविमनुपमां चारुचन्द्रांशुहासं,**
**प्रेमोल्लासं तव तु कुचयो र्द्वन्द्वमन्तः स्मरामि।।६७।।**

---

जनस्य हृदयं वशीकुर्वन्तौ, अकस्मात् कौमारे प्रकट नवकैशोर विभवौ कौमारे सहसैव प्रकटो नवकैशोरस्य विभवो ययोस्तौ, रहसि परिहासादि निरतौ–रहः स्थाने परस्पर परिहासादि लीलाविहारे निरतौ, श्रीराधा ब्रजपति कुमारौ–श्रीराधाकृष्णौ, अहं कदा वा प्रपश्यन् पूर्णः–सफलकामः, स्याम्।।६६।। रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी।।

हे श्रीराधे ! अहं ते–तव, नव परिमलैः उल्लसत्फुल्लमल्ली–मालं धर्म्मिल्ल–नवः सद्योजातः परिमलैः हृद्यसुगन्धैः उल्लसत्फुल्ला–यामल्ली मल्लिका तन्मल्लिका विद्यते यस्मिन् तं धर्म्मिलं कुसुमगर्भ भौक्तिक पद्मरागलतिकादिना वहिः संयतं वद्धं केशकलापं, स्मरामि, क्रमावरोहेण पुनरहं तव लसत् सान्द्र सिन्दूरबिन्दु भालच्छविमपि–निविड़सिन्दूर बिन्दु विद्यते यस्मिन् तं ललाटदेशमपि, स्मरामि, पुनरनुपमां दीर्घापाङ्गच्छबि स्मरामि, प्रेमोल्लासं चारुचन्द्रांशुहासंप्रेम्नः उल्लसनं यस्मात्तं चारुचन्द्र–किरणतुल्यं हास्यं, तु तव कुचयो र्द्वन्द्वमन्तः स्मरामि।।६७।। मन्दाक्रान्तावृत्तम्।।

---

हृदय का हरण कर ब्रजनागर के पथ–पथ में क्रीड़ा करते–रहते हैं, अकस्मात् उस कौमारकाल में ही जिनके नवकैशोर विभव प्रकटित होने से रहः प्रदेश में जाकर परस्पर परिहासादि लीलाविहार में प्रवृत्त हो गये, उन श्रीराधा ब्रजेन्द्रनन्दन के दर्शन कर मैं कब कृतार्थ हो जाऊँगा ? ।।६६।। हे श्रीराधे ! आपके नव परिमल

**लक्ष्मीकोटि विलक्षलक्षण लसल्लीला किशोरीशतै,**
**राराध्यं ब्रजमण्डलेऽतिमधुरं राधाभिधानं परम्।**
**ज्योतिः किञ्चन सिञ्चदुज्ज्वलरस प्राग्भावमाविर्भव,**
**द्राधे चेतसि भूरिभाग्यविभवैः कस्याप्यहोजृम्भते।।६८।।**
**तज्जीयान्नवयौवनोदयमहालावण्यलीलामयं,**
**सान्द्रानन्दघनानुरागघटितश्रीमूर्त्तिसम्मोहनम्।**

---

अहो-आश्चर्य्ये, ब्रजमण्डले लक्ष्मीकोटि विलक्ष्य लक्षणलसल्लीला-किशोरीशतैराराध्यं-ब्रजमण्डले कोटिलक्ष्मीणां विशेषेणलक्षणीयं यल्लक्षणं तल्लसत् शोभायमानं लीलायां यासु, ताभिः किशोरीशतैः शत शत ब्रजरामाभिः आराध्यं, किञ्चन ज्योतिः सिञ्चदुज्ज्वल रस प्राग्भावं-श्यामज्योतिः सिञ्चत् य उज्ज्वलरस शृङ्गाररसराजमूर्त्तिः श्रीकृष्ण स्तस्मिन्रसे प्राग्भावं प्राक्सत्ता यस्य तं, अतिमधुरं तस्मात् परं-श्रेष्ठतमं-राधाभिधानं-राधेति नामधेयं, कस्यापि-अनिर्वचनी-यस्यापि, आविर्भवद्राधे-चेतसि-ध्यानेन आविर्भवति राधा यस्मिन् तस्मिन् चित्ते, भूरिभाग्य विभवैः बहुसौभाग्यसम्पद्भिः, जृम्भते-विस्तारं प्राप्नोति॥६८॥ शार्दूलविक्रीडितंवृत्तम्॥

नवयौवनोदय महालावण्यलीलामय-नवयौवनस्य उदये यन्महालावण्यं तल्लीलामयं यत् सान्द्रानन्दघनानुराग घटित

---

समन्वित प्रफुल्लमल्लिका मालावेष्टित धर्म्मिल्ल, निविड़ सिन्दूरबिन्दु परिशोभित ललाट, अनुपम दीर्घापाङ्गच्छबि, प्रेमोल्लासपूर्ण चारुचन्द्रांशु हास्य एवं वक्षोज युगल की रहस्यता का स्मरण करता हूँ॥६७॥ जिनकी लीला में कोटि लक्ष्मी के लक्षण निचय शोभित हैं, उन शत-शत ब्रजकिशोरीगण के द्वारा सेवनीय एवं ज्योतिः सिञ्चनकारी उज्ज्वलरस का प्राग्भाव स्वरूप, अति मधुर श्रेष्ठ श्रीराधा नाम, ब्रजमण्डल में किसी एक भाग्यवान् के ध्यानविभावित चित्त में अनेक सौभाग्य सम्पद द्वारा विस्तार प्राप्त हो रहा है ॥६८॥ जों नवयौवनोदय से महालावण्य लीलामय

**वृन्दारण्य निकुञ्जकेलि ललितं काश्मीरगौरच्छवि,**
**श्रीगोविन्द इव ब्रजेन्द्र गृहिणी प्रेमैकपात्रंमहः।।६९।।**
**प्रेमानन्द रसैकवारिधि महाकल्लोलमालाकुला,**
**व्यालोलारुणलोचनाञ्चल चमत्कारेण सञ्चिन्वती।**
**किञ्चित् केलिकलामहोत्सवमहो वृन्दाटवी मन्दिरे,**
**नन्दत्यद्भुत कामवैभवमयी राधा जगन्मोहिनी।।७०।।**

---

श्रीमूर्त्तिसम्मोहनं-सान्द्रानन्दघनः श्रीकृष्णस्तस्य अनुरागरचिता या शोभनमूर्त्ति स्तां सम्मोहयति यत्, वृन्दारण्य निकुञ्जकेलिललित-वृन्दावने यानि निकुञ्जानि तेषुकेलिकरणे ललितं सुन्दर यत्, काश्मीर गौरच्छविंकुङ्कुमवद् गौरच्छविः दीप्तिर्यस्य, श्रीगोविन्द इव ब्रजेन्द्र गृहिणी कीर्त्तिदा तयोः श्रीगोविन्द इव प्रीते र्विषयं यत्, तन्महः-रूपमाधुर्य्यं, जीयात्-सर्वोत्कर्षेण वर्त्ततु॥६९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो ! आश्चर्य्ये, प्रेमानन्दरसैकवारिधिमहाकल्लोलमाला-कुला, श्रीकृष्ण एव प्रेमानन्दरसस्यैक समुद्रः, तस्य योमहाकल्लोलः क्रीड़नं, तस्य या मालाश्रेणी तया आकुला विह्वला या सा, व्यालोलारुण लोचनाञ्चल चमत्कारेण किञ्चित् केलिकलायाः कौशलस्य महोत्सवं आनन्दमयव्यापारं विचिन्वती विचारयती या सा, अद्भुत कामवैभवमयी-अद्भुतो यः कामः प्रेमा तस्य यद्वैभवं तन्मयी या सा, च जगन्मोहिनी राधा वृन्दाटवी मन्दिरे-वृन्दावननिकुञ्जमन्दिरे, नन्दति-आनन्द्रं प्राप्नोति॥७०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

हैं, जो सान्द्रानन्दघन श्रीकृष्ण के अनुरागघटित श्रीमूर्त्ति का भी सम्मोहनकारिणी है, जो श्रीवृन्दावनीय निकुंजकेलि में सुन्दर एवं श्रीगोविन्द की भाँति व्रजेन्द्र गृहिणी के एकमात्र प्रीतिपात्र हैं, वे कुंकुम गौरच्छबि श्रीराधारूप माधुर्य्य लययुक्त हों॥६९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

आहा ! जो प्रेमानन्दरस वारिधि श्रीकृष्ण की महाकल्लोल माला से आकुलित होकर चंचलारुण नयनापांग चारुता के द्वारा

**वृन्दारण्य निकुञ्जसीमनि नवप्रेमानुभावभ्रमद्,**
**भ्रूभङ्गीलवमोहित ब्रजमणिर्भक्तैक चिन्तामणिः।**
**सान्द्रानन्दरसामृतस्रवमणिः प्रोद्दामविद्युल्लता,**
**कोटिज्योतिरुदेति कापि रमणीचूड़ामणिर्मोहिनी॥७१॥**
**लीलापाङ्गतरङ्गितैरुदभवन्नेकैकशः कोटिशः,**
**कन्दर्पाः पुरुदर्पटङ्कृत महाकोदण्डविस्फारिणः।**

---

कापि–अनिर्वचनीया, नवप्रेमानुभाव भ्रमद्भ्रूभङ्गी लवमोहित ब्रजमणिः–नवप्रेमानुभावेन भ्रमद् योभ्रूभङ्गी स्तस्य यो लवः कणा, तया मोहितः ब्रजमणिः श्रीकृष्ण यया सा, सान्द्रानन्द रसामृतस्रवमणिः–निविड़ं यदानन्द रसामृतं तस्य स्रवन्मणिः निर्झररूपेतिभावः, भक्तैक चिन्तामणिः, भक्तानां सर्वाभीष्ट साधक मणिस्वरूपा, प्रोद्दामविद्युल्लता कोटिज्योतिः–प्रदीप्त विद्युल्लता कोटीनां दीप्ति र्यस्यां सा, मोहिनी–जगन्मोहिनी, रमणीचूड़ामणिः, ब्रजरमणीनांचूड़ामणिः श्रीराधेत्यर्थः। वृन्दारण्य निकुञ्जसोमनि–वृन्दावनस्थ निकुञ्जस्य सीम्नि, उदेति–आविर्भवति॥७१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यस्याः तारुण्य प्रथम प्रवेश समये–यस्याः वयः सन्धि समये, लीलापाङ्ग तरङ्गित्वैः पुरुदर्पटङ्कृत महाकोदण्ड विस्फारिणः एकैकेशः कोटिशः कन्दर्पाः उद्भवन्–उद्भवन्–लीलया अपाङ्गानां

---

केलिकला महोत्सव का आयोजन करती हैं, वह अद्भुत कामवैभवमयी जगन्मोहिनी श्रीराधा श्रीवृन्दावन के निकुंज मन्दिर में आनन्दित हैं॥७०॥ ब्रजमणि श्रीकृष्ण जिनके नवप्रेमानुभाव चंचल भ्रूभंग लव के द्वारा विमोहित हैं। जो भक्तैक चिन्तामणि एवं निविड़ आनन्द रसामृत की निर्झर मणिस्वरूपा हैं, जिनकी अंगकान्ति–उद्दीप्त कोटि विद्युल्लता की भाँति है, वे भुवनमोहिनी रमणी चूड़ामणि श्रीवृन्दावन की निकुंज सीमा में आविर्भूत हैं॥७१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

**तारुण्य प्रथम प्रवेश समये यस्या महामाधुरी,**
**धारानन्तचमत्कृता भवतु नः श्रीराधिका स्वामिनी।।७२।।**
**यत् पादाम्बुरुहैकरेणुकणिकां मूर्ध्नानिधातुं नहि,**
**प्रापुर्ब्रह्मशिवादयोऽप्यधिकृतिं गोपेक्यभावाश्रयाः।**
**सापि प्रेमसुधारसाम्बुधिनिधी राधापि साधारणी,**
**भूताकालगतिक्रमेण वलिना हे दैव तुभ्यं नमः।।७३।।**

---

तरङ्गितैः नर्त्तनैः एकैकशः पुरुप्रचुर दर्पेण टङ्कृत महाकोदण्ड विस्फारिणः कोटि कोटि कन्दर्पाः उत्पन्ना अभवन्, सा महामाधुरी धारानन्त चमत्कृता - महामाधुर्य्य धाराणामनन्तत्वेन चमत्कृता, श्रीराधिका नः-अस्माकं-स्वामिनी भवतु।।७२।। शार्दूलविक्रीड़ितंवृत्तम्।।

ब्रह्मशिवादयोऽपि-आदिपदेन सनकादयः, यत् पादाम्बुरुहैक रेणुकां-यस्यांः चरणकमलरेणोः कणिकामात्रं, मूर्ध्ना-शिरसा, निधातुं-नितरां धारयितुं, अधिकृतिं-अधिकारं, नहिप्रापुः-न प्राप्ता-वभूवः, किन्तु गोप्यैक भावाश्रयाः-येगोपीभावाश्रिताः साधकाः तेषां, सापि-प्रेमसुधा रसाम्बुधिनिधिराधापि-सा प्रेमसुधारसाम्बुधिः श्रीकृष्णः तस्य हृदयरत्नस्वरूपा राधापि, वलिना कालगति क्रमेण साधारणीभूता-सहजेनलभ्या, अतएव हे दैव-वृन्दावनवासिनाम-स्माकं भाग्यं, दैवं भागधेयमित्यमरः। तुभ्यं नमः, ब्रह्मशिवादेः-पेक्षयापि सौभाग्याधिकत्वाद् अस्माकं भाग्यं नमस्कार योग्यमिति भावः।।७३।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

जिनकी वयःसन्धि के समय में लीलापांग नर्त्तनमात्र से कोटि-कोटि महाकोदण्ड विस्फारी कन्दर्प की सृष्टि होती है, वे महामाधुरी धारानन्त चमत्कृता श्रीराधिका हमारी स्वामिनी होवें।।७२।। ब्रह्मशिव सनकादि भी जिनकी चरणाम्बुज की रेणुकणा को मस्तक पर धारण करने का अधिकार प्राप्त नहीं कर पाते हैं, आश्चर्य की बात है, बलवान कालगति क्रम से वह प्रेमामृत-

**दूरे स्निग्धपरम्परा विजयतां दूरे सुहृन्मण्डली,**
**भृत्याः सन्तु विदूरतो ब्रजपतेरन्यः प्रसङ्गः कुतः।**
**यत्र श्रीवृषभानुजा कृतरतिः कुञ्जोदरे कामिना,**
**द्वारस्था प्रियकिङ्करी परमहं श्रोष्यामि काञ्चिध्वनिम्।।७४।।**
**गौराङ्गे म्रदिमास्मिते मधुरिमा नेत्राञ्चले द्राघिमा,**
**वक्षोजे गरिमा तथैव तनिमा मध्ये गतौ मन्दिमा।**

---

ब्रजपतेः-श्रीकृष्णस्य, स्निग्धपरम्परा-तारतम्येन स्नेह-पात्राणि,च सुहृन्मण्डली दूरे दूरे विजयतां-विजयं कुर्वन्तु: भृत्याः अपि विदूरतः- विशेषेण दूरे, सन्तु-तिष्ठन्तु, अन्यः प्रसङ्गः कुतः, अन्येषां का गणनेति भावः, यत्र-कुञ्जोदरे कुञ्जभवनाभ्यन्तरे, कामिना-श्रीकृष्णेन सह, श्रीवृषभानुजा-श्रीराधा, कृतरतिः, कृतारतिर्यस्याः, प्रियकिङ्करी अहं तत्र द्वारस्था-कुञ्जद्वारेस्थिता सती, परंकाञ्चीध्वनिं श्रोष्यामि-श्रवणं करिष्यामि।।७४।।

हे श्रीराधे ! ते, तव, गौराङ्गे भ्रदिमा, यो मृदोर्भावः कोमलता, समे=मम, ध्याने गोचरः अस्तु-ध्यानगोचरी भवतु, स्मितेमधुरिमामृदुहास्ये यन् मधुरिमा सोऽपि, नैत्राञ्चले द्राघिमा-नेत्रान्तभागे यद्दीर्घता सापि, वक्षोजे गरिमा-स्तनयोः यत् स्थूलतासापि, तथैव मध्ये तनिमा-तथैव मध्ये कटिदेशे यत् कृशता, गतौ मन्दिमा-पादन्यासेयद्धीरता, सापि, च पुनः श्रोण्यां

---

रसाम्बुधिनिधि श्रीराधा, गोपीभावाश्रित साधकगणों के निकट साधारण रूप से उपलब्ध हैं, अतएव हे देवि तुम्हें नमस्कार है।।७३।। अन्य की बात ही क्या है, जहाँ से श्रीकृष्ण के स्नेहपात्रगण एवं तदीय सुहृद्गण हटकर रहते हैं एवं उनके भृत्यगण भी अति दूरस्थ ही रहते हैं, उस कुंजाभ्यन्तर में वृषभानुनन्दिनी श्रीराधा, कामी श्रीकृष्ण के साथ केलिविलास में प्रवृत्त होने से प्रिय किंकरी मैं कब कुंजद्वार में रहकर श्रेष्ठ कांचीध्वनि सुनूँगी।।७४।। शार्दूलविक्रीड़ितंवृत्तम्।।

**श्रोण्याञ्च प्रथिमाभ्रुवोः कुटिलिमाबिम्बाधरे शोणिमा,**
**श्रीराधे हृदि ते रसेन जड़िमा ध्यानेऽस्तु मे गोचरः॥७५॥**
**प्रातः पीतपटं कदा व्यपनयाम्यन्यांशुकास्यार्पणात्,**
**कुञ्जे विस्मृत कञ्चुकीमपि समानेतुं प्रधावामि वा।**
**बध्नीयां कबरीं युनज्मि गलितां मुक्तावलीमञ्जये,**
**नेत्रे नागरि रङ्गकैश्च पिदधाम्यङ्गव्रणं वा कदा॥७६॥**

---

प्रथिमा-नितम्बे यत् पृथुलता सापि, भ्रूवोः कुटिलिमा-यत् कुटिलता सापि, बिम्बाधरे शोणिमा-पक्वबिम्बवदधरे यो रक्तिमा सोऽपिहृदि रसेन-श्रीकृष्णेन, कृतः यो जड़िमा सोऽपि मम ध्यानगोचरो भवतु (इति प्रार्थना) ॥७५॥

हे नागरि ! अन्यांशुकस्यार्पणात् प्रातः पीतपटं कदा व्यपनयाभि भ्रमात् अन्यस्य अंशुकस्य श्रीकृष्णस्योत्तरोयस्यार्पणात् प्रातः तत् पीतवसनं, अहं कदा व्यपनयामि-विशेषेण अपनयनं करिष्ये, वा कुञ्जे विस्मृत कञ्चुकीमपि समानेतुं प्रधावामि-विहार कुञ्जे भ्रमात्त्यक्ता वा कञ्चुकी तदानयनार्थं अहं प्रधावामि, अहं तव कबरीं कदा बध्नीयां-बन्धनं करिष्यामि, गलितां मुक्तावलीं युनज्मि-ग्रथ्नीयाम्, नेत्रे कदा अञ्जये-अञ्जनं दास्यामि, वा तव अङ्गव्रणं - कान्तकृतं नखदशनादेश्चिह्नं, कदा रङ्गकैश्च-

---

हे श्रीराधे ! आपके गौरांग में जो कोमलता एवं मृदुहास्य में जो मधुरिमा, नेत्रांचल में जो दीर्घता, वक्षोज में जो स्थूलता तथा कटिदेश में जो कृशता, पादन्यास में धीरता नितम्ब में पृथुलता, भ्रूद्वय में कुटिलता, बिम्बाधर में रक्तिमा, हृदय में रस श्रीकृष्ण के द्वारा जो जड़िमा है, वह मेरा ध्यान गोचर हो॥७५॥ शार्दूलविक्रीड़ितंवृत्तम्॥ हे नागरि ! भ्रम से श्रीकृष्ण के उत्तरीय ग्रहण करने से मैं कब निशावसान के समय उस पीतवसन का अपसारण आपके अंग से करूँगी। भूल से कुंज में कंचुलिका छोड़ आने से मैं कब उसे लाने के लिए दौड़कर जाऊँगी ? मैं कब

**यद् वृन्दावनमात्र गोचरमहो यन्नश्रुतीकं शिरो,**
**प्यारोढुं क्षमते न यच्छिवशुकादीनान्तु यद् ध्यानगम्।**
**यत् प्रेमामृतमाधुरी रसमयं यन्नित्य कैशोरकं,**
**तद्रूपं परिवेष्टुमेव नयनं लोलायमानं मम।।७७।।**
**धर्म्माद्यर्थ चतुष्टयं विजयतां किं तद् वृथा वार्त्तया,**
**सैकान्तेश्वर भक्तियोग पदवी त्वारोपिता मूर्धनि।**

---

कस्तूरीसिन्दूरादिभिः, पिदधामि, आच्छादयामि, येन गुरुजनेर्नाबधेयमित्यर्थः।।७६।। शार्दूलविक्रीड़ितंवृत्तम्।।

अहो ! आश्चर्ये, यद् वृन्दावनमात्र गोचरं-यद् वृन्दावने सहजेनैव दर्शनीयम् नान्यत्र वैकुण्ठादिष्वेति भावः, श्रुतीकं यत् शिरोपि आरोढुं न क्षमते-श्रुतिरपि यत् वर्णयितुं न शक्यं भवतीति भावः यच्छिव शुकादीनां तु न ध्यानगं-यत् शिवशुकादीनां संयतचित्तानामपिध्यानगम्यं न भवति, यत् प्रेमामृत माधुरीरसमयं 'पुनः' नित्य कैशोरकं तद्रूप-श्रीराधायाः रूपमाधुर्य्यं परिवेष्टुमेव-अन्वेष्टुमेव, मम नयनं लीलायमानं-चञ्चलं भवति।।७७।। शार्दूलविक्रीड़ितंवृत्तम्।।

धर्माद्यर्थ चतुष्टयं विजयतां- धर्मार्थकाममोक्षेति चतुर्वर्गं विजयतां, तत् वृथा वार्त्तया किं-तेषां वृथा वार्त्तया किं प्रयोजनमित्यर्थः। सैकान्तेश्वर भक्तियोग पदवी तु मूर्द्धनि आरोपिता-एकान्त ईश्वर भक्तियोगस्य या पदवी पद्धति यद्वा भक्तियोगेन

---

जड़ाबन्ध दूँगी, कब टूटी हुई मुक्तामाला को फिर से गूथूँगी, कब नयनों में अंजन प्रदान करूँगी एवं कब मैं अंग क्षत को सिन्दूर, कस्तूरी आदि से ढकूँगी ? ।।७६।। अहो ! जो केवल श्रीवृन्दावन में ही दर्शनीय हैं, वेद भी जिनका वर्णन करने में समर्थ नहीं हैं, जो शिवशुकादि संयतचित्तगण के ध्यानगम्य नहीं हैं एवं जो प्रेमामृत माधुरी रसमय हैं, उस नित्य कैशोररूपमाधुर्य्य के आस्वादन के निमित्त मेरे नयन चंचल हो रहे हैं।।७७।। धर्मार्थ काममोक्ष चतुर्वर्ग

**या वृन्दावन सीमनि काचन घनाश्चर्य्या किशोरिमणि,**
**स्तत् कैङ्कर्य्य रसामृतादिह परं चित्ते न मे रोचते।।७८।।**
**प्रेम्णः सन्मधुरोज्ज्वलस्य हृदयं शृङ्गार लीलाकला,**
**वैचित्री परमावधिर्भगवतः पूज्येव कापीशता।**

---

या पदवी भक्तरुपाधि र्भवति, सा शिरसि स्थापिता श्रद्धावशात् श्लिष्टार्थे नतु तत् प्रयोजनमितिभावः, यो वृन्दावन सीम्नि कश्चन धनाश्चर्यः किशोरमणिः-वृन्दावनसीम्नि कश्चनः अनिर्वचनीयः निविड़ाश्चर्य्यरूपी यः किशोरिमणिः, तत् कैङ्कर्य्य रसामृतात् मम इहचित्ते परं न किञ्चिदपि रोचते॥७८॥ शार्दूलविक्रीड़ितंवृत्तम्॥

सन्मधुरोज्ज्वलस्य प्रेम्नः हृदयं-सन् अप्राकृतः मधुरोज्ज्वलः मधुरः पारकीयः प्रेमा तस्य प्राणस्वरूपा या, शृङ्गार कला वैचित्री परावधिः-सम्भोग लीलायां या लीला कला वैचित्री तस्याः परावधिः तत्रैव पर्य्याप्तिरित्यर्थः। भगवतः कापि पूज्यैव ईशता-भगवतः महाविष्णोरपि कापि अनिर्वचनीया चासौ पूज्या एव ईशता आज्ञाकर्त्री, ईशानो-शिवशक्ति, च शची-इन्द्राणी, एव महासुख तनुः शक्तिः-महासुखेन लालिता तनु र्यस्याः सा यद्वा महासुखरूपा तनुः ह्लादिनीशक्तिः तथा भूता शक्तिरूपिण्यपि, स्वतन्त्र-स्वाधीना, अतएव परा-पराप्रकृतिरूपिणी, श्रीवृन्दावननाथ-पट्टमहिषी-श्रीवृन्दावननाथः श्रीकृष्णः तस्य पट्टमहिषी, महिषीषु

---

की जय हो, उसकी वृथा वार्ता से आवश्यकता क्या है ? एकान्त ईश्वर भक्तियोग की जो पद्धति अथवा ईश्वर भक्तियोग के द्वारा भक्तसंज्ञा मिलती है उसको भी मैं मस्तक पर रखता हूँ। श्रीवृन्दावन की सीमा में एक अनिर्वचनीय घनाश्चर्यरूप किशोरीमणि अवस्थित हैं, उनके किंकरीत्व रूपरसामृत को छोड़कर मेरे चित्त में अपर किसी का श्रेष्ठत्व बोध नहीं है॥७८॥ जो अप्राकृत मधुर पारकीय प्रेम की प्राणस्वरूपा, सम्भोग लीलाकला वैचित्र्य की परावधि, भगवान् महाविष्णु की भी पूज्यनीया, ईश्वरी, ईशानी, शची,

**ईशानी च शची महासुखतनुः शक्तिः स्वतन्त्रा परा,**
**श्रीवृन्दावननाथ पट्ट महिषी राधैव सेव्या मम।।७९।।**
**राधा दास्य मपास्य यः प्रयतते गोविन्द सङ्गाशया,**
**सोऽयं पूर्णसुधारुचेः परिचयं राकां विना काङ्क्षति।**
**किञ्च श्यामरति प्रवाहलहरी बीजं न ये तां विदु,**
**स्ते प्राप्यापि महामृताम्बुधिमहो बिन्दुं परं प्राप्नुयुः।।८०।।**
**कैशोराद्भुतमाधुरीभरधुरिणांगच्छविं राधिकां,**
**प्रेमोल्लासभराधिकां निरवधि ध्यायन्ति ये तद्धियः।**

---

मध्ये प्रधाना महिषी, राधैव मम सेव्या–आराध्या अस्ति।।७९।। शार्दूलविक्रीड़ितंवृत्तम्।।

यः राधादास्य मपास्य–सन्तज्य गोविन्द सङ्गाशया प्रयतते सः राकां–पूर्णिमां विना पूर्णसुधारुचेः परिचयं काङ्क्षति–परिचयं वाञ्छति विना राधा प्रसादेन कृष्णप्राप्ति र्न जायते इत्यर्थः। किञ्च–ापरञ्च श्याम प्रीति प्रवाहलहरी बीजं–कृष्णप्रीति प्रवाहस्य य लहरी तस्याः बीजं उत्पत्तिस्थानं या, तां येन विदुः अहो–आश्चर्य्यै, ते महामृताम्बुधिं प्राप्यापि परंविन्दुं–विन्दुमात्रमपि प्राप्नुयुः।।८०।।

अहो–आश्चर्य्यै, आत्मनैव कर्मभिः त्यक्ताः मनसैव कर्मभिः त्यक्ताः कर्म स्मृत्याद्युक्तं नित्यनैमित्तिकादि नतु भजनीय–

---

महासुख तनु शक्तिस्वरूपिणी होकर भी जो स्वतन्त्रा हैं, उन पराप्रकृति श्रीवृन्दावननाथ श्रीकृष्ण की पट्टमहिषी श्रीराधा ही मेरी एकमात्र आराध्या हैं।।७९।। जो जन श्रीराधा की दास्यता को छोड़कर श्रीकृष्ण संग प्राप्ति की चेष्टा करते हैं, वे पूर्णिमा को छोड़कर पूर्णचन्द्र परिचय की आकांक्षा करते हैं, किन्तु श्रीकृष्ण प्रीति प्रवाह के उत्पत्तिस्थानस्वरूप श्रीराधा को नहीं जानते हैं, अहो ! वह महासमुद्र को प्राप्तकर भी केवल बिन्दुमात्र ही लाभ करते हैं।।८०।। शार्दूलविक्रीड़ितंवृत्तम्।।

**त्यक्ताः कर्म्मभिरात्मनैव भगवद्धर्मेऽप्यहो निर्ममाः,**
**सर्वाश्चर्य्यगतिं गता रसमयी तेभ्योमहद्भ्यो नमः॥८१॥**
**लिखन्ति भुजमूलतो न खलु शङ्खचक्रादिकं,**
**विचित्र हरिमन्दिरं न रचयन्ति भालस्थले।**
**लसत्तुलसिमालिकां दधति कण्ठपीठे नवा,**
**गुरोर्भजन विक्रमात् क इइ ते महाबुद्धयः॥८२॥**

---

परिचर्य्यादि, तदनुशीलन रूपत्वात्, भगवद्धर्मेऽपि निर्म्ममः- भगवच्छास्त्रेषु विधिनिषेधात्मको यद्धर्मः तस्मिन्नपि नास्ति ममता अनुरागं येषां ते, तद्धियस्य-तस्यामेव श्रीराधायामेव धीः ऐकान्तिकी रतिर्येषां ते, ये कैशोराद्भुत माधुरीभर धुरीणाङ्गच्छविं-कैशोरे या अद्भुता माधुरी तद्युक्ता सर्वोत्कृष्टा अङ्गच्छवि र्यस्याः ताम्, प्रेमोल्लास भराधिकां प्रेमोल्लासेन सर्वाधिकपरिपूर्णां, राधिकां निरवधि-सर्वकालं-ध्यायन्ति ते रसमयीं सर्वाश्चर्यगतिं गता- रसमयीत्वात् सर्वेषां स्पृहणीया या अपूर्वा गतिः तां प्राप्ताः, तेभ्यो महद्भ्यः-भक्तेभ्यः नमः॥८१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

गुरोर्भजन विक्रमात्-गुरुः अभीष्टदेवः अत्र श्रीराधैवेतिभावः, तद्भजनबलेन, येखलु-निश्चयेन, भुजमूलतः शङ्खचक्रादिकं न लिखन्ति, मुद्राधारणं न कुर्वन्ति, भालस्थले-ललाटे, विचित्र हरि- मन्दिरं न रचयन्ति-तिलक रचनां न कुर्वन्ति, का कण्ठपीठे लसत्तुलसि-

---

अहो ! मन से भी काम्यकर्म को त्यागकर, ऐसा कि भगवद्विधान सम्मताश्रमधर्म के प्रति ममता न रखकर आविष्ट चित से जो केवल अद्भुत कैशोरमाधुरी भूषितांगच्छवि प्रेमोल्लासभराधिका श्रीराधिका का ध्यान निरवधि करता है, वह सर्वआश्चर्य एकरसमयी गति को प्राप्त करता है, उन महद् व्यक्ति को नमस्कार है॥८१॥ अनन्य भजननिष्ठा से जो जन निज बाहुमूल में शङ्ख, चक्रादि को धारण नहीं करते हैं एवं ललाट में विचित्र श्रीहरिमन्दिर तिलक रचना नहीं करते, किम्वा कण्ठ में

**कर्म्माणि श्रुति बोधितानि नितरां कुर्वन्तु कुर्वन्तु मा,
गूढ़ाश्चर्य्यरसाः स्रगादिविषयान् गृह्नन्तु मुञ्चन्तु वा,
कैर्वा भाव रहस्यपारगमतिः श्रीराधिका प्रेयसः,
किञ्चिज्ज्ञैरनुयुज्यतां वहिरहो भ्राम्यद्भिरन्यैरपि॥८३॥**

---

मालिकां न दधति-शोभायमाना तुलसी सम्भूता मालिकां कण्ठे न धारयन्ति, इहलोके ते महाबुद्धयः के ? महाबुद्धयः महान्तश्चासौ अबुद्धयः महामूर्खः इत्यर्थः, क इति कथनेन तेषां परिचय दानं दुष्करमिति भावः॥८२॥ जसौजसयलावसुग्रह यतिश्च पृथ्वीगुरुः॥

ते गूढ़ाश्चर्यरसः-गूढ़ः गोपनीयः आश्चर्य रूपोरसः येषु ते उज्ज्वलमधुररसाश्रिताः साधकाः, श्रुतिबोधितानि कर्म्माणि-वेद प्रणिहितानि कर्म्माणि, नितरां-सर्वदा, कुर्वन्तु वा माकुर्वन्तु-कुर्वन्तु चेत् को लाभः अकुर्वन्तु को दोषः, इति, स्रगादि विषयान्-विषयभोग विलासोपकरणादीन्, गृह्नन्तु वा मुञ्चन्तु गृह्नन्तु चेत् को दोषः, मुञ्चन्तु वा को लाभः, इत्यर्थः। अहो ! आश्चर्य्ये, एतादृशः श्रीराधिका प्रेयसः भाव रहस्य पारगमतिः-श्रीराधिका प्रेयसः श्रीकृष्णस्य भावरहस्ययोः सागरस्य पारगतामतिर्यस्य सः, किञ्चिज्ज्ञै-अल्पज्ञैः, वहिः भ्राम्यद्भिः-बहिर्मुखजनैः, अन्यैरपि-अन्यैः कर्मी ज्ञानी योगीजनादिभिरपि कैर्वा सह अनुज्यताम्॥८३॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

श्रीतुलसीमाला भी धारण नहीं करते हैं, वे इस जगत् में महा अबुद्धिजन कौन हैं ? ॥८२॥

विशुद्ध ब्रजभक्ति रसाश्रित भक्तगण श्रुत्युक्त कर्मकाण्ड का अनुष्ठान सर्वत्र करे अथवा न करे, स्रक् चन्दनादि विषय समूह अर्थात् भोग सुख के उपकरणादि का ग्रहण करे अथवा त्याग करे, उससे उनकी कोई हानि नहीं है, अहो ! अतएव तादृश श्रीराधाकान्त का भावरहस्य निष्णात व्यक्ति अल्पज्ञ, बहिर्मुख, काम्यकर्मी ज्ञानी, योगीजनादि किसके साथ मिलित होंगे ? वे सब अन्य किसी के सदृश

**अलं विषयवार्त्तया नरककोटि वीभत्सया,**
**वृथा श्रुति कथा श्रमो वत विभेमि कैवल्यतः।**
**परेश भजनोन्मदा यदि शुकादयः किं ततः,**
**परं तु मम राधिका पदरसे मनो मज्जतु।।८४।।**
**तत् सौन्दर्य्यं सच नवनवो यौवनश्री प्रवेशः,**
**सा दृग्भङ्गी सच घनरसाश्चर्य्यवक्षोज कुम्भः।**
**साऽयं बिम्बाधरं मधुरिमा तत्स्मितं साच वाणी,**
**सेयं लीलागतिरपि न विस्मर्य्यते राधिकायाः।।८५।।**

---

नरक कोटि वीभत्सया विषयवार्त्तयाअलं-कोटि नरकादपि अति घृणितया विषयवार्त्तया अलं किं प्रयोजनं व्यर्थमितिभावः, श्रुतिकथाश्रमः वृथा-वेदाभ्यास श्रमोऽपि व्यर्थः, वत-अहो, कैवल्यतः विभेमि-मोक्षाद्बहुभयं प्राप्नोमि, यदि परेश भजनोन्मदाः शुकादयः ततः किम्-हरिभजनोन्मत्ताः शुकादयश्चेत् ततः किम् तद्वत जीवन्मुक्तत्वेनापि किं प्रयोजनमित्यर्थः। परन्तु राधिका पदरसे मम मनो मज्जतु।।८४।। पृथ्वीवृत्तम् जसौजसयलावसुग्रहयतिश्च पृथ्वीगुरुः।। राधिकायाः तत् सौन्दर्यं च स नववयो यौवनश्री प्रवेशः-कैशोरान्ते नवयौवनस्यकान्तिरुद्गमनम्, सा दृग्भङ्गी-नेत्रवक्रिमा, च स रसघनाश्चर्य वक्षोजकुम्भः-रसघनः श्रीकृष्णस्तस्य आश्चर्यरूपो स्तनकलसः, सोऽयं बिम्बाधर मधुरिमा च तत् स्मितं

---

नहीं होंगे।।८३।। कोटि नरक की अपेक्षा अति घृणित विषयवार्ता भी व्यर्थ हैं, वेदाध्ययन श्रम भी वृथा है। अहो ! मोक्ष भी अत्यन्त भयानक है, यहाँ तक कि श्रीहरि भजनोन्मत्त शुकादि की भाँति जीवन्मुक्तावस्था से भी कोई प्रयोजन नहीं है, किन्तु मेरा मन केवल श्रीराधिका के पद रस में निमग्न हो।।८४।। मैं श्रीराधिका का वह सौन्दर्य्य, वयःसन्धि में यौवनश्री का प्रवेश, नयनभंगिमा, रसघन श्रीकृष्ण का आश्चर्यकारक वक्षोज युगल, बिम्बाधर मधुरिमा, मृदुहास्य, मधुरवाक्य एवं चंचल पादविन्यास को भूल नहीं सकता हूँ।।८५।।

**यल्लक्ष्मीशुकनारदादि परमाश्चर्य्यानुरागोत्सवैः,**
**प्राप्तंत्वत् कृपयैव हि ब्रजभृतां तत्तत्किशोरीगणैः।**
**तत् कैङ्कर्य्यमनुक्षणाद्भुतरसं प्राप्तुं धृताशे मयि,**
**श्रीराधे नवकुञ्जनागरी कृपादृष्टिं कदा दास्यसि॥८६॥**
**लब्ध्वा दास्यं तदति कृपया मोहनस्वादितेन,**
**सौन्दर्य्य श्रीपदकमलयोर्लालनैः स्वापितायाः।**

---

मन्दहास्यं च सा वाणी च सा इयं लीला-चञ्चला, गतिरपि मया न विस्मर्य्यते॥८५॥ मन्दाक्रान्तावृत्तम्॥

हे नवकुञ्जनागरि श्रीराधे ! लक्ष्मी शुकनारदादि परमाश्चर्य्यानुरागोत्सवैः-लक्ष्मी शुकनारदादीनां परमाश्चर्य्यानुरागस्य उत्सवो येषु तैः, ब्रजभृतां मुख्यब्रजवासिनां, तत्तत् किशोरीगणैः-ललिताद्यष्ट सखीनामष्टगणैः हि-निश्चयेन, त्वं कृपया एवयत् प्राप्तं तत् अनुक्षणाद्भुत रसं-प्रतिक्षणं अद्भुतः रसो यस्मिन् तत् कैङ्कर्य्य प्राप्तु धृतांशे-धृता आशा येन तस्मिन्-मयि कृपादृष्टिं कदा दास्यसि॥८६॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहं तत्-तस्याः, सौन्दर्य्य श्रीपदकमलयोः लालनैः स्वापितायाः सौन्दर्य्यश्रियः स्थानुभूते ये पदकमले तयोर्लालनैः सेवनैः स्वापिता निद्रिता या तस्याः, श्रीराधायाः अति कृपया दास्यं-कैङ्कर्य्यं, लब्ध्वा मोहन-स्वादितेन मोहनेन श्रीनन्दनन्दनेन आस्वादितेन मधुर - मधुरोच्छिष्ट पीयूषसारं मधुरादपि मधुरं

---

हे नवकुञ्जनागरि श्रीराधे ! लक्ष्मी शुकनारदादि के परमाश्चर्यैरूप अनुरागोत्सवमयी ब्रजकिशोरीगणों ने आपकी कृपा से जो कुछ प्राप्त किया है, वह अनुक्षण अद्भुत रसयुक्त आपका कैंकर्य दास्य के निमित्त मैं अभिलाषी हूँ, कब आप मेरे प्रति दृक्पात करेंगी ? ॥८६॥ सौन्दर्य श्रीपदकमल सम्वाहन के द्वारा निद्रिता श्रीराधिका की कृपा से दास्यता प्राप्तकर श्रीनन्दनन्दन के आस्वादन से मधुरादपि मधुर जो श्रीराधा का भोज़नावशेष

**श्रीराधाया मधुर मधुरोच्छिष्ट पीयूषसारं,**
**भोजं भोजं नवनव रसानन्दमग्न कदा स्याम्।।८७।।**
**यदि स्नेहाद्राधे दिशसि रतिलाम्पट्य पदवीं,**
**गतं मे स्वप्रेष्ठं तदपि मम निष्ठां शृणु यथा।**
**कटाक्षैरालोके स्मित सहचरैर्जात पुलकं,**
**समाश्लिष्याम्युच्चैरथ च रसये त्वत् पदरसम्।।८८।।**
**कृष्णः पक्षो नवकुवलयं कृष्णसारस्तमालो,**
**नीलाम्भोद स्तव रुचिपदं नाम रूपैश्च कृष्णा।**

---

यदुच्छिष्टं तदेव पीयूषसारं अमृतस्य सारभूतं, भोज्यं भोजन-पुनः पुनः भोजनं कुर्वन् सन्, नव नव रसानन्दमग्नः कदा स्याम॥८७॥ मन्दाक्रान्तावृत्तम्॥

हे श्रीराधे ! त्वं रतिलाम्पट्य पदवीं गतं रतौ आसक्तत्वं प्राप्तं, मे-मम, स्वप्रेष्ठं अतिशयप्रियं गुरुकृपा सखीमितिभावः, यदि स्नेहात् दिशसि पादसम्वाहने आज्ञां करोषि, तदपि ममनिष्ठां शृणु, यथा, स्मितसहचरैः स्मितं मन्दहास्य तेनैव सहचरन्ति तैः, कटाक्षैः आलोके जात पुलकं पादस्पर्शमात्रेण पुलकाञ्चित देहं यस्य तमेव प्रेष्ठं दृष्ट्वा, अहं तं, उच्चैः समाश्लिष्यामि, अथच त्वत्पदरसं रसये बहु धार्ष्ट्येन तं गाढ़ समाश्लिष्य त्वत् पादरसं ग्रहीष्यामीत्यर्थः॥८८॥ शिखरिणीवृत्तम्॥ रसै रुद्रै श्छिन्ना यमनसभलागः शिखरिणी॥

---

पीयूषसार है उसे भोजन करते-करते मैं कब नव-नव रसानन्द में निमग्न हो जाऊँगी ? ॥८७॥ हे श्रीराधे ! आप रतिलाम्पट्य प्राप्त प्रियजन के पादसम्बाहन करने के लिए आदेश करने से उस समय में मेरी जो निष्ठा है, उसको मैं प्रकट करता हूँ। श्रवण करो, मैं आपकी मृदुहास्ययुक्त कटाक्ष के आलोक से उन प्रियजन को आपके पादस्पर्श से रोमांचित कलेवर देखकर आपके पादपद्म रस का आस्वाद मैं कब ग्रहण करूँगी॥८८॥

**कृष्णे कस्मात्तव विमुखता मोहन श्याम मूर्त्ता,**
**वित्युक्त्वा त्वां प्रहसितमुखीं किं नु पश्यामि राधे।।८९।।**
**लीलापाङ्ग तरङ्गितैरिविदिशोनीलोत्पल श्यामला,**
**दोलायत्कनकाद्रि मण्डलमिव व्योम स्तनैस्तन्वतीम्।**
**उत्फुल्लस्थल पङ्कजामिव भुवं रासे पदन्यासतः,**
**श्रीराधामनुधावतीं ब्रजकिशोरीणां घटां भावये।।९०।।**

---

हे श्रीराधे ! कृष्णपक्षः-अभिसारानुकूलत्वात्, नवकुवलयं नीलकमलं कृष्णवर्ण सादृश्यात्, कृष्णसारः मृगविशेषः तत् सम्बन्धात्, तमालः तद्वर्णत्वात्, नीलाम्भोदः नवीनमेघस्तत् समशीलत्वात्, नामरूपैश्च कृष्ण नाम्ना रूपेण च कृष्णैव यमुना, तव रुचिपदं भवति। तस्मात् मोहनश्याममूर्त्तौ कृष्णे कस्मात् तत्र विमुखता ? इति उक्त्वा अहं त्वां प्रहसितमुखी प्रफुल्लमुखीं, किन्तु पश्यामि ? ॥८९॥ मन्दाक्रान्तावृत्तम्॥

लीलापाङ्ग तरङ्गितैः दिशः नीलोत्पलश्यामलामिव लीलया ये अपाङ्गाः तेषां तरङ्गितैः दिशः नीलोत्पल सदृशश्यामा इव, यत्र यत्र तत् कटाक्ष दृष्टिः पतति तत्र श्यामतैव भवतीति भावः। स्तनैः व्योमं आकाशं दोलायां कनकाद्रिमण्डलमिव दोलायमानं

---

कृष्णपक्ष, नीलकमल, कृष्णसार तमाल, नवीन मेघ, कृष्ण 'यमुना' जिनके नाम के सादृश्य हेतु आपको रुचिप्रद हैं, उन मोहनश्याममूर्त्ति श्रीकृष्ण में किस लिए आपकी विमुखता है ? हे श्रीराधे ! यह कहकर क्या मैं आपका प्रफुल्लमुखी दर्शन नहीं करूँगी? ॥८९॥ जो सब ब्रजललनागण निज लीलापांग तरंग के द्वारा दिक् समूह को नीलोत्पल सदृश श्यामल स्तन द्वारा आकाश को दोलायमान् कनकाचल के सदृश सुन्दर एवं पदविन्यास के द्वारा श्रीरासमण्डल भूमि को उत्फुल्लस्थल पंकज की भाँति सुशोभित कर रही हैं, उन श्रीराधा की अनुगामिनी ब्रजकिशोरी घटा की भावना मैं कर रही हूँ॥९०॥

**दृशौत्वयि रसाम्बुधौ मधुरमीनवद् भ्राम्यतं,**
**स्तनौ त्वयि सुधासरस्यहह चक्रवाकाविव।**
**मुखं सुरतरङ्गिणि त्वयिविकासिहेमाम्बुजं,**
**मिलन्तु मयि राधिके तव कृपातरङ्गच्छटाः।।९१।।**
**कान्ताढ्याश्चर्य्य कान्ताकुलमणिकमला कोटिकाम्यैकपादा,**
**म्भोज भ्राजन्नखेन्दुच्छविलवविभवा काप्यगम्या किशोरी।**

---

कनकाचलमण्डलं सुमेरुमण्डलमिव, च पदन्यासतः रासे भुवं तत्र या भूमिं, उत्फुल्लस्थल पङ्कजामिव तन्वतीं प्रफुल्लस्थलपङ्कजमिव– विस्तारयन्तीं, श्रीराधा मनुधावन्तीं ब्रजकिशोरिणां घटां अहं भावये भावयामि॥९०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहह ! अत्याश्चर्ये, हे श्रीराधिके ! त्वयि दृशौ लोचने, रसाम्बुधौ रससागरे श्रीकृष्णे, मधुरमीनवत् भ्राम्यतः त्वयि स्तनौ सुधासरसि अमृत सरोवरे, चक्रवाकौ इव भवतः, हे सुरतरङ्गिणिः सुरतरङ्गिणि वा इत्यक्षर विश्लेषणात्, त्वयि मुखं विकासि हेमाम्बुजं प्रफुल्ल स्वर्णकमलवत् भवतीत्यर्थः, तवकृपा तरङ्गच्छटाः मयिमिलन्तु॥९१॥ पृथ्वीवृत्तम्॥

उन्मर्याद प्रवृद्ध प्रणयरस महाम्भोधि गम्भीर लीलामाधुर्य्यो जृम्भिताङ्गी उन्मर्य्यादः अत्यन्त मर्य्यादा विंशिष्टश्च प्रवृद्धः सदाभिवृद्धिं प्राप्तः यः प्रणयस्य अनुरागः स एव महासमुद्रः तस्मिन् या गम्भीरा लीला तस्यां यन्माधुर्य्यं तेन उज्जृम्भितानि उल्लसितानि अङ्गानि यस्याः सा, कमलाकोटि काम्यैक पादाम्भोज

---

अहो श्रीराधे ! आपके नयनयुगल रससागर में मधुरमीन के सदृश भ्रमणरत हैं, आपके स्तनयुगल सुधासरोवर में चक्रवाक मिथुन की भाँति हैं एवं हे सुरतरंगिणी ! आपके वदन प्रफुल्लस्वर्ण कमल की भाँति शोभित हैं, आपकी कृपातरंगच्छटाः मेरे प्रति पतित हो॥९१॥ उन्मर्याद एवं प्रबुद्ध प्रणयरसरूप महाम्भुधि की गम्भीर लीला माधुर्य से जिनका अंग उल्लसित है, जिनके पदकमल

**उन्मर्य्याद प्रवृद्ध प्रणय रसमहाम्भोधि गम्भीरलीला,**
**माधुर्य्योज्जृम्भिताङ्गी मयि किमपि कृपारङ्गमङ्गी करोतु।।९२।।**
**कलिन्दगिरि नन्दिनी पुलिन मालती मन्दिरे,**
**प्रविष्ट वनमालिना ललित केलि लोलीकृते।**
**प्रतिक्षण चमत्कृताद्भुत रसैक लीलानिधे,**
**निधेहि मयि राधिके निजकृपा तरङ्गच्छटाम्।।९३।।**

---

भ्राजान्नखेन्दुच्छविलवविभवा कोटि कमलानां यत् काम्यवस्तु तदेवैक पदकमले दीव्यत् नखचन्द्रस्य कान्तिकणा तद्वैभवं यस्याः सा, कान्ताढ्याश्चर्य्य कान्ताकुलमणिः कान्तेन श्रीकृष्णेन सहमिलिता यद् आश्चर्य्यरूपः कान्ताकुलः ब्रजकिशोरीणां समूहः तच्छिरोमणि स्वरूपा या सा, कापि–अनिर्वचनीया, अगम्या ब्रह्मादीनामपि मनोवचोभ्यामगोचरा, किशोरी श्रीराधा, मयिकिमपि कृपारङ्गभङ्गी करोतु कृपयाः रङ्गं दातुं स्वीकरोतु।।९२।। भ्रम्नैर्यानांत्रयेण त्रिमुनियतियुता स्त्रग्धरा कीर्त्तितेयम्॥ हे कलिन्दगिरिनन्दिनीपुलिन मालती मन्दिरे प्रविष्ट वनमालिना ललितकेलि लोलीकृते श्रीयमुनापुलिने यन्मालतीकुञ्ज मन्दिरः तस्मिन् अभ्यन्तरे प्रविष्टो यो वनमाली श्रीकृष्णः तेन या ललितकेलिः तथा चञ्चली कृता या तस्याः सम्बोधनम्। हे प्रतिक्षण चमत्कृताद्भुत रसैक लीलानिधे प्रतिक्षण मनोहरः आश्चर्य्यरूपः योरसः श्रीकृष्ण स्तस्य लीलायाः

---

की शोभा एकमात्र नखचन्द्र की कान्तिकणा कोटि कमला का काम्य विभव है एवं जो कान्ता श्रीकृष्ण के साथ सम्मिलिता हैं, आश्चर्यरूपा ब्रजकिशोरीगण की शिरोमणिस्वरूपा ब्रह्मा प्रभृति के वाक्य मन की अगोचरा वह कौन एक किशोरी मुझे कृपा कर अंगीकार करें।।९२।। हे श्रीयमुनापुलिनवर्त्ती मालतीकुंज मन्दिर में प्रविष्ट वनमाली की ललित केलिविलास द्वारा चंचलीकृते ! हे प्रतिक्षण मनोहर रसस्वरूप श्रीकृष्ण की एकमात्र लीलानिधिस्वरूपे ! हे श्रीराधिके ! निज कृपातरंगच्छटा मेरे प्रतिनिहित करो।।९३।।

**यस्यास्ते वत किङ्करीषु बहुशश्चाटुनि वृन्दाटवी,**
**कन्दर्पः कुरुते तवैव किमपि प्रेप्सुः प्रसादोत्सवम्।**
**सान्द्रानन्द घनानुराग लहरी निस्यन्दपादाम्बुज,**
**द्वन्द्वे श्रीवृषभानुनन्दिनि सदा वन्दे तव श्रीपदम्।।९४।।**
**जज्जापः सकृदेव गोकुलपतेराकर्षकस्तत्क्षणाद्,**
**यत्र प्रेमवतां समस्त पुरुषार्थेषु स्फुरेत्तुच्छता।**

---

निधिस्वरूपा या हे तथाविधे ! हे राधिके ! मयि निज कृपा तरङ्गच्छटा निधेहि धारय॥९३॥ पृथ्वीवृत्तम्॥

हे सान्द्रानन्द घनानुराग लहरी निष्पन्द पादाम्बुजद्वन्द्वे ! सान्द्रानन्दघनः श्रीकृष्णः तस्य या अनुरागलहरी तस्याः निस्यन्दनं यस्मात् एतादृशे पदकमलद्वन्द्वे यस्याः हे तथाविधे, हे वृषभानुनन्दिनि! हे श्रीराधे ! तवैव किमपि प्रसादोत्सवप्रेप्सुः तव प्रसन्नतारूपमुत्सवं वाञ्छति यः सः, वृन्दाटवीकन्दर्पः वृन्दावनस्याभिनव कन्दर्पः श्रीकृष्ण इत्यर्थः, वत हर्षेण, ते तव, किङ्करीषु बहुशः चाटुनि प्रार्थनानि कुरुते ! अहं तव श्रीपदं सदावन्दे॥९४॥ शार्दूलविक्रीड़ितंवृत्तम्॥

सकृदेव यज्जापः तत्क्षणात् गोकुलपतेः आकर्षको भवति यत् वारमेकमुच्चारणमात्रेणैव गोकुलपतिः श्रीकृष्णः आकर्षितो भवति तद्रसिकत्वाद्वशीभूतः इतिभावः। यत्र प्रेमावतां समस्त

---

हे सान्द्रानन्दघन श्रीकृष्णानुराग लहरी निस्यन्दि पदाम्बुजद्वन्द्वे ! हे वृषभानुनन्दिनी श्रीराधे ! आपका प्रसादोत्सव लाभेच्छु एक वृन्दावन कन्दर्प श्रीकृष्ण आपकी किंकरीगण के समीप में हर्ष से बहुशः प्रार्थना करते रहते हैं, मैं आपके उन श्रीचरण-कमल की वन्दना करूँ॥९४॥ जिसका उच्चारण एकबार करने से ही नन्दनन्दन श्रीकृष्ण भी तत्क्षणात् आकृष्ट होते हैं, जिनमें प्रीति सम्पन्न होने से समस्त पुरुषार्थ में तुच्छता उपस्थित होती है, स्वयं माधव

**यन्नामाङ्कित मन्त्र जापन परः प्रीत्या स्वयं माधवः,**
**श्रीकृष्णोऽपि तदद्भुतं स्फुरतु मे राधेति वर्णद्वयम्।।९५।।**
**कालिन्दीतट कुञ्जमन्दिरगतो योगीन्द्रवत् यत् पद,**
**ज्योति र्ध्यान परः सदा जपति यां प्रेमाश्रुपूर्णोहरिः।**
**केनाप्यद्भुतमुल्लसद्रतिरसानन्देन सन्मोहितः,**
**सा राधेति सदा हृदि स्फुरतु मे विद्यापरा द्व्यक्षरा।।९६।।**
**देवानामथ भक्तमुक्त सुहृदामत्यन्त दूरं च यत्,**
**प्रेमानन्दरसं महासुखकरं चोच्चारितं प्रेमतः।**

---

पुरुषार्थेषु धर्मार्थ काम मोक्षेषु तुच्छता स्फुरेत्, स्वयं माधवः श्रीकृष्णोऽपि प्रीत्या यन्नामाङ्कितः यन्नाम संयुक्तः, मन्त्रजापनपरः भवति तदद्भुतं आश्चर्यरूपं, राधेति वर्णद्वयं मे मम रसनायां, स्फुरतु आविर्भवतु।।९५।। शार्दूलविक्रीड़ितंवृत्तम्।।

कालिन्दीतट कुञ्जमन्दिरगतः यमुनातटान्त र्वर्त्तिकुञ्जे यन्मन्दिरः तस्मिन् प्राप्तमिति ध्यानस्थानमुक्तम्, योगीन्द्रवद् यत् पदज्योति र्ध्यान परः योगीन्द्रः शिवो यथा ध्यानपरः भवति तद्वद् यस्याः पद ज्योतिः ध्यान परश्च, प्रेमाश्रुपूर्णः हरिः यां सदा जपति सा केनाप्यद्भुतमुल्लसद्रतिरसानन्देन सम्मोहिता राधेति द्व्यक्षरा पराविद्या मे-मम हृदि सदा स्फुरतु।।९६।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

श्रीकृष्ण भी जिनके नामांकित मन्त्र का जप प्रीतिपूर्वक करते रहते हैं, वह अद्भुत 'राधा' यह वर्णद्वय मेरी रसना में स्फुरित हो।।९५।। श्रीयमुनातटवर्त्ती कुञ्ज मन्दिर में श्रीकृष्ण योगीन्द्र की भाँति जिनके पदनखज्योति के ध्यान परायण होकर प्रेमाश्रु से अभिषिक्त होकर जिसका जप सर्वदा करते रहते हैं, उन अनिर्वचनीय अद्भुत उल्लासकर रतिरसानन्द सम्मोहिता 'राधा' यह दो अक्षरयुक्ता पराविद्या सर्वदा मेरे हृदय में स्फुरित हो।।९६।।

**प्रेम्णाकर्णयते जपत्यथमुदा गायत्यथालिद्वयं,**
**जल्पत्यश्रुमुखो हरिस्तदमृतं राधेति मे जीवनम्॥९७॥**
**या वा राधयति प्रियं ब्रजमणिं प्रौढ़ानुरागोत्सवैः,**
**संसिद्ध्यन्ति यदाश्रयेण हि परं गोविन्द सख्युत्सुकाः।**

---

यत् देवानां अथ भक्तमुक्त सुहृदामत्यन्त दूरं यत् देवानां ब्रह्मादीनां अथ अनन्तरं भक्तानां प्रह्लादाम्बरीषादीनां युक्तानां सनकजनकशुक देवादीनां सुहृदां अर्जुन सुभद्र बलभद्रविजयादीनां अत्यन्त दूरं न प्रापनीयमित्यर्थः, यत् प्रेमानन्दरसं तत् प्रेमतः उच्चारितं महासुखकरं। अयं हरिः श्रीकृष्णः, यत् प्रेम्ना आकर्णयते सखीभिरुच्चारितं चेत् तद्भावे, स्वयं यत् जपति अथ आलिषु सखीषु, मुदा हर्षेण गायति च प्रेमाश्रुमुखः सन् जपति तद् राधेति अमृतं मे–मम, जीवनं भवति॥९७॥ शार्दूलविक्रीड़ितंवृत्तम्॥

या प्रौढ़ानुरागोत्सवैः प्रकृष्टानुरागानन्द व्यापारैः, प्रियं ब्रजमणिं प्रियतमं ब्रजकामपूरकं मणिरूपं श्रीकृष्णं, आराधयति, गोविन्द सख्युत्सुकाः सखीषु औत्सुक्यं यासां ता यद्वा गोविन्देन सह सख्ये प्रियनम्मतायां औत्सुक्यं येषां, ते यदाश्रयेण यस्याः आश्रय मात्रेण, हि निश्चयं, परं संसिध्यति परंकृतार्थाभवन्तीत्यर्थः। या एका रसवती एक एव रसः श्रीकृष्णं तद्वती एकरसः शृङ्गाररसः तद्वती वा, यत् यस्याः, आराधनात् परमा पदासिद्धिर्भवति, सा

---

जो देवता, भक्त, मुक्त, सुहृद्गणों के विदूरवर्त्ती हैं, जो प्रेमानन्दरस स्वरूप हैं, स्वयं श्रीकृष्ण जिसका श्रवण प्रेम से करते हैं, जप भी करते हैं, सखीगणों के मध्य में आनन्द से गाते रहते हैं, प्रेमाश्रुपूर्ण वदन से जल्पना करते हैं, वह श्रीराधानामामृत ही मेरा जीवन होवे॥९७॥ जो प्रौढ़ानुरागोत्सव के द्वारा प्रियतम ब्रजमणि श्रीकृष्ण का भजन सर्वदा करती हैं, जो गोविन्द सख्युत्सव हैं, वह भी जिनके श्रीचरणाश्रयमात्र से परम कृतार्थ हैं, जो

**यत् सिद्धिःपरमापदैकरसवत्याराधनान्ते नु सा,**
**श्रीराधाश्रुति मौलिशेखर लतानाम्नी मम प्रीयताम्।।९८।।**
**गात्रे कोटितड़िच्छवि प्रवितताऩन्दच्छवि श्रीमुखे,**
**बिम्वोष्ठे नव विद्रुमच्छविकरे सत्पल्लवैकच्छवि।**
**हेमाम्भोरुहकुड्नलच्छविकुचद्वन्द्वेऽरविन्देक्षणं,**
**वन्दे तन्नवकुञ्जकेलि मधुरं राधाभिधानं महः।।९९।।**

---

श्रुतिमौलिंशेखर लता नाम्नी श्रीराधा श्रुतिमौलिः उपनिषद् तच्छेखरः श्रीकृष्णः प्रेमकल्पतरु स्वरूपः तदालिङ्गिता या लता तन्नाग्नी श्रीराधा, तु किं, मम प्रीयतां॥९८॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यत्र गात्रे कोटितड़िच्छवि, श्रीमुखे प्रविततानन्दच्छवि प्रकर्षेण विस्तार प्राप्तं यदानन्दं तस्यच्छवि, बिम्वौष्ठे नवविद्रुमच्छवि पक्व बिम्बफल कोमलौष्ठाधरयोः नवप्रवालस्यच्छवि, करे सत्पल्लवैकच्छवि करयोः अश्वत्थादीनां सत्पल्लवानामेकच्छवि, कुच द्वन्द्वे हेमाम्भोरुह कुट्नलच्छवि स्तनद्वये स्वर्णकमल कलिकाच्छवि, तत् अरविन्देक्षणं फुल्लेन्दीवरनेत्रम, नवकुञ्जकेलि मधुरं नवकुञ्जेषु या केलि तासु मधुरं, राधाभिधानं महः, राधेति आख्या यस्य तन्महः तेजः श्रीराधायाः रूपमाधुर्य्यमिति भावः, अहं वन्दे॥९९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

एकरसवती हैं एवं जिनकी आराधना से परमा सिद्धिलाभ होता है, वे श्रुतिमौलिशेखर लतानाम्नी श्रीराधा क्या मुझ पर कृपा करेंगी॥९८॥ जिनके तन में कोटि विद्युत् की छबि, श्रीमुख में प्रवर्द्धित आनन्दच्छबि, बिम्वौष्ठे नव विद्रुमच्छबि, कर में अश्वत्थादि सत् पल्लव की च्छबि, वक्षोजयुगल में स्वर्णकमल कलिका की च्छबि हैं, उन फुल्लेन्दीवर नेत्रा, नवकुंजकेलि मधुरा श्रीराधा के रूपमाधुर्य्य की वन्दना करता हूँ॥९९॥

**मुक्तापङ्क्ति प्रतिमदशना चारुबिम्बाधरोष्ठी,**
**मध्ये क्षामा नवनवरसावर्त्तगम्भीर नाभिः।**
**पीनश्रोणिस्तरुणिम समुन्मेष लावण्यसिन्धु,**
**वैदग्धीनां किमपि हृदयं नागरी पातु राधा।।१००।।**
**स्निग्धा कुञ्जित नीलकेशि विदलद् बिम्बोष्ठी चन्द्रानने,**
**खेलत् खञ्जन गञ्जनाक्षि रुचिमन्नासाग्रमुक्ताफले।**
**पीनश्रोणितनुदरिस्तनतटीवृत्तच्छटात्यद्भुते,**
**श्रीराधे भुजवल्लि चारुवलये स्वं रूपमाविष्कुरु।।१०१।।**

---

मुक्तापङ्क्ति प्रतिमदशना, चारुबिम्बाधरौष्ठी मध्येक्षामा क्षीणमध्या, नवनव रसावर्त्त गम्भीर नाभिः नवनव रसानां आवर्त्तरूपा गम्भीरा नाभिर्यस्याः सा, पीनश्रोणिः स्थूलकटिः, तरुणिम समुन्मेष लावण्यसिन्धु तरुणिम्ना तारुण्येन सम्यग् उन्मेषितं यल्लावण्यं तस्य सिन्धुरूपा, किमपि अनिर्वचनीयं, वैदग्धीनां हृदयं नागरी राधा नः पातु॥१००॥ हे स्निग्धाकुञ्चित नीलकेलि ! हे विदलद् बिम्बौष्ठि ! हे चन्द्रानने ! हे खेलत् खञ्जन गञ्जनाक्षि ! हे रुचिमन्नासाग्रमुक्ताफले ! नासाग्रे देदीप्यमानं मुक्ताफलं यस्याः हे तथाविधे, हे स्तनतटी वृत्तच्छटात्यद्भुते ! स्तनयोस्तटी प्रान्तभागः, तत्र यत् वर्त्तुलता तस्य याच्छटा तया अत्युद्भुता या, हे तथाभूते ! हे राधे ! त्वं स्वं स्वकीयं, रूपं आविष्कुरु॥१०१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

मुक्तापङ्क्ति प्रतिमदशाना, चारुबिम्बाधरौष्ठी, क्षीणमध्या, नवनवरसावर्त्त गम्भीरनाभि, स्थूलकटि, तारुण्य समुन्मेषित लावण्यसिन्धु, वैदग्धी की हृदयस्वरूपा नागरी श्रीराधा हमारी रक्षा करें।।१००।। मन्दाक्रान्तावृत्तम्।। हे स्निग्धा कुञ्चितनीलकेशी ! हे विदलितबिम्बाधरौष्ठि ! हे चन्द्रवदने ! हे क्रीड़ाशील खञ्जन गञ्जनाक्षि ! हे देदीप्यमान् नासाग्रमुक्ताफले! हे पीनश्रोणि ! हे क्षीणोदरि ! हे स्तनतटीवृत्तछटाद्भुते !

**लज्जान्तः पटमारचय्य रचितस्माय प्रसूनाञ्जलौ,**
**राधाङ्गे नवरङ्गधामनि ललितप्रस्तावने यौवने।**
**श्रोणी हेमवरासने स्मरनृपेनाध्यासिते मोहनं,**
**लीलापाङ्ग विचित्र ताण्डव कलापाण्डित्य मुन्मीलति॥१०२॥**
**सा लावण्य चमत्कृतिर्नववयो रूपञ्चतन्मोहनं,**
**तत्तत् केलिकला विलास लहरी चातुर्य्यमाश्चर्य्यभूः।**

---

मोहनं सर्वचित्तविस्मापनं, लीलापाङ्ग विचित्रताण्डवकला पाण्डित्यं लीलया ये अपाङ्गास्तेषु यत् विचित्रताण्डवकला तत् पाण्डित्यं, लज्जान्तः पट मारचय्य लज्जा एव अन्तः पटं यवनिकां आरचय्य पुनः पुनः रचयित्वा, रचित स्मायप्रसूनाञ्जलौ रचितस्मायः अद्भुतः प्रसूनस्य अञ्जलिः यत्र तस्मिन्, ललित प्रस्तावने यौवने लालित्येन सह यौवनस्य प्रस्तावनं आरम्भं यत्र तस्मिन्, नवरङ्ग धाम्नि नवीनाः ये रङ्गास्तेषां निवासस्थाने, राधाङ्गे स्थलं प्राप्य, उन्मीलति॥१०२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यत्र सा लावण्य चमत्कृतिश्च तन्मोहनं नववयोरूपं यत्र तं तस्य श्रीकृष्णस्य मोहनं नववयोरूपं, तत्तत् केलिकला विलास लहरी चातुर्य्यं यत्र तत्तत् श्रीराधामाधवयो र्यत् केलिकलाविलासः तल्लहरीषु यत् चातुर्य्यं तत्, आश्चर्य्यभूः, यत्र सर्वाश्चर्यत्वं

---

हे श्रीभुजवल्लि चारुवलये ! हे श्रीराधे ! आप स्वरूप को प्रकट करें॥१०१॥ जिसमें कन्दर्पराजाधिष्ठित श्रोणीरूप हेमवरासन तथा ललित यौवन शोभित है एवं जो अद्भुत प्रसूनाञ्जली विरचित नवरस की लीलाभूमि है, श्रीराधा के उस श्रीअंगों में सुमोहन लीलापांग विचित्र ताण्डवकला पाण्डित्य, लज्जा यवनिका की सृष्टि पुनः पुनः करके उन्मीलित है॥१०२॥ जिसमें लावण्य की चमत्कृति तथा कृष्णमनोहर नववयः सन्धि का माधुर्य्य शोभित है, जिसमें श्रीराधाश्यामसुन्दर की केलिकला विलास लहरी चातुर्य्य विद्यमान है, जिसमें सर्वाश्चर्य्यत्व परिस्फुट है, जिसमें किंचित्मात्र

**नो किञ्चित् कृतमेव यत्र न नुतिर्नागो नवा सम्भ्रमो,**
**राधामाधवयोः स कोऽपि सहजः प्रेमोत्सवः पातु वः।।१०३।।**
**येषां प्रेक्षां वितरति नवोदारगाढ़ानुरागा,**
**न्मेघश्यामोमधुरमधुरानन्दमूर्त्ति र्मुकुन्दः।**
**वृन्दाटव्यां सुमहिम चमत्कार कारिण्यहो किं,**
**तानि प्रेक्षेऽद्भुत रसनिधानानि राधा पदानि।।१०४।।**

---

द्योतितमित्यर्थः, यत्र न किञ्चित्कृतमेव यत्र किञ्चिदपि न कृतं छिन्नमेव, कृतं तु वेष्टितेछिन्ने इति मेदिनी, यत्र न नुतिः स्तुतिः। यत्र न आगः अपराधः, वा न सम्भ्रमः भयादि जनित त्वरा आवेगः, स कोऽपि अनिर्वचनीयः, श्रीराधामाधवयोः सहजः स्वाभाविकः नतु वैकृतः, प्रेमोत्सवः वः युस्मान् पातु॥१०३॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो आश्चर्य्ये, मेघश्यामः मधुरमधुरानन्द मूर्त्तिर्मुकुन्दः श्रीकृष्णः, नवोदार गाढ़ानुरागात् नवश्चासौ उदारस्य यो गाढ़ानुरागः, तस्मात् येषां प्रेक्षां येषां प्रेक्षां येषां पदानांदर्शनेच्छां, वितरति विस्तारयति, का वार्त्तामन्येषामिति भावः, अहं तानि वृन्दाटव्यां सुमहिमचमत्कारकारीनि, वृन्दावने सुष्ठु महिमा यस्य तस्य चमत्कारीणि, अद्भुत रसनिधानानि राधापदानि राधापदचिह्नानि, राधापदविक्षेपानिवा, किं प्रेक्षे ? ॥१०४॥ मन्दाक्रान्तावृत्तम्॥

---

भी अविच्छिन्नता नहीं है, गुरुगौरव में स्तुति नहीं है, अपराध नहीं है, सम्भ्रम भी नहीं है, श्रीराधामाधव का वह अनिर्वचनीय सहज प्रेमोत्सव आप सबकी रक्षा विधान करें॥१०३॥

अहो ! मधुर से भी मधुरानन्द मूर्त्ति मेघश्याम श्रीकृष्ण, नवोदार गाढ़ानुराग से जिनकी दर्शनाकांक्षा करते हैं, ऐसे श्रीवृन्दावन में सुमहिम चमत्कारकारी अद्‌भुत रसनिधान श्रीराधा के पदांक समूह का दर्शन क्या मुझे होगा ? ॥१०४॥ हे श्रीराधे ! केलितल्प

**बलान्नीत्वातल्पे किमपि परिरभ्याधर सुधां,**
**निपीय प्रोल्लिख्य प्रखरनखरेण स्तनभरम्।**
**ततो नीविं न्यस्ते रसिक मणिना त्वत् कर,**
**धृते कदा कुञ्जच्छिदे भवतु मम राधेऽनुनयनम्।।१०५।।**
**करं ते पत्रालिं किमपि कुचयोः कर्त्तुमुचितं,**
**पदं ते कुञ्जेषु प्रियमभिसरन्त्या अभिसृतौ।**
**दृशौ कुञ्जच्छिद्रैस्तव निभृत केलिं कलयितुं,**
**यदावीक्षे राधे तदपि भविता किं शुभदिनम्।।१०६।।**
**रहो गोष्ठिं श्रोतुं तव निज विटेन्द्रेण ललितां,**
**करे धृत्वा त्वां वा नवरमणतल्पे घटयितुम्।**

---

हे श्रीराधे ! त्वां तल्पं प्रति बलान्नीत्वा किमपि अनिर्वचनीयं परिरभ्य अधरसुधां निपीय प्रखर नखरेण स्तनभरं प्रोल्लिख्य ततः रसिकमणिना त्वत्करधृते नीवींन्यस्ते सतिकुञ्जछिद्रेममानुनयनं कदा भवतु॥१०५॥ शिखरिणीवृत्तम्॥

हे श्रीराधे ! यदाते कुचयोः किमपि अनिर्वचनीयं, कर्त्तुमुचितं करं, करं, कुञ्जेषु प्रियमभिसरन्त्याः ते अभिसृतौ पदं, कुञ्जछिद्रैः तव निभृतकेलिं कलयितुं दृशौ अहं वीक्षे, तदापि ममशुभदिनं किं भविता भविष्यति॥१०६॥ शिखरिणीवृत्तम्॥

हे श्रीराधे ! निज विटेन्द्रेण सह ललितां रहः गोष्ठीं श्रोतुं

---

के प्रति बलपूर्वक आकर्षण कर आलिंगन पूर्वक अधर सुधापान करके तथा प्रखर नखराघात से वक्षोज को विक्षत कर रसिकमणि श्रीकृष्ण आपको कम्पितहस्ता देखकर स्वयं नीवीबन्धन कर देंगे, मैं कब कुञ्जस्थ छिद्र पथ से यह दर्शन करूँगी॥१०५॥ हे श्रीराधे ! मेरा वैसा शुभदिन कब होगा ? जब परिचर्य्या के लिए हस्त, कृष्णाभिसार के समय अनुगमन में पदद्वय, अनुपम लीलामाधुरी दर्शन के लिए नयनद्वय उपयुक्त हुए हैं, यह मैं कब देखूँगी॥१०६॥

**रतामर्दस्रस्तं कचभरमथो संयमयितुं,**
**विदध्याः श्रीराधे मम किमधिकारोत्सव रसम्।।१०७।।**
**वृन्दाटव्यां नवनव रसानन्दपुञ्जे निकुञ्जे,**
**गुञ्जद्भृङ्गी कुलमुखरिते मञ्जु मञ्जु प्रहासैः,**
**अन्योन्यक्षेपणनिचयणप्राप्तसंगोपनाद्यैः,**
**क्रीड़ज्जीयाद्रसिक मिथुनं क्लप्त केली कदम्बम्।।१०८।।**
**रूपं शारदचन्द्र कोटि वदने धम्मिल्य मल्लीस्रजा,**
**मामोदै र्विकली कृतालि पटले राधे कदा तेऽद्भुतम्।**

---

श्रीकृष्णेन सह तव मधुरं रहस्यालापं श्रोतुं, वा त्वां करे धृत्वा नव रमण तल्ये घटयितुं अथ रतामर्दस्रस्तं कचभरं संयमयितुं त्वं मम अधिकारोत्सव रसं किं विदध्याः।।१०७।। शिखरिणीवृत्तम्।।

वृन्दाटव्यां श्रीवृन्दावने, नवनव रसानन्दपुञ्जे गुञ्जद् भृङ्गीकुल मुखरिते निकुञ्जे मञ्जुमञ्जु प्रहासैः मधुर मधुर प्रहासैः सह, अन्योन्य क्षेपण निचयन प्राप्त सङ्गोपनाद्यैः क्रीड़ाकौतुकैः खेलत्, कल्प्त केलिकदम्बं कृतकल्पनः केलि समूहोयेन तत्, रसिक मिथुनं श्रीराधाश्यामसुन्दरं जीयात्।।१०८।। मन्दाक्रान्तावृत्तम्।।

हे शारद चन्द्रकोटि वदने ! हे धम्मिल्ल मल्लीस्रजामामोदै र्विकलीकृतालि पटले यस्याः धम्मिल्ले संयत केशपाशे मल्लिका मालानां आमोदैः सुगन्धैः अलिपटलः भृङ्गसमूहाः विकलीकृताः

---

हे श्रीराधे ! निज विटेन्द्र के साथ ललितरहः गोष्ठी श्रवण के निमित्त तथा मिलन निमित्त, केशपाश को संयत करने के लिए मैं कब सेवा सौभाग्य प्राप्त करूँगी ? ।।१०७।। श्रीवृन्दावन में नव-नव रसानन्द पुंजयुक्त गुंजनशील भृंगीकुल मुखरित निकुंज में मधुर-मधुर हास्य के साथ परस्पर कन्दुक क्षेपण धारण प्राप्त संगोपनादि क्रीड़ारत तथा विविध केलिकुशल रसिकयुगल जययुक्त हों।।१०८।।

**ग्रैवेयोज्ज्वल कम्बुकण्ठि मृदुदोर्वल्लीचलत् कङ्कणे,**
**वीक्षेपट्ट दुकूल वासिनि रणत्मञ्जीरपादाम्बुजे॥१०९॥**
**इतो भयमितस्त्रपाकुलमितो यशः श्रीरितो,**
**हिनस्त्यखिल शृङ्खलामपि सखी निवासस्त्वया।**
**सगद्गदमुदीरितं सुबहुमोहना काङ्क्षया,**
**कथं कथमयीश्वरिप्रहसितैः कदा म्रेड्यसे॥११०॥**

---

हे तथाविधे ! हे ग्रैवेयोज्ज्वल कम्बुकण्ठि ग्रैवेयः कण्ठभूषणस्ते उज्जवलः शङ्खवद्वर्त्तुलः कण्ठः यस्याः तत् सम्बोधनम्, हे मृदुदोर्वल्ली चलत् कङ्कणे कोमलभुजकल्पवल्लयोः चलन्ति कङ्कणानि यस्याः हे तथाविधे, हे पट्टदुकूलवासिनि ! हे रणन्मञ्जीर पादाम्बुजे शब्दायमाने नूपुरयुक्ते चरणकमले यस्याः हे तथाविधे, हे राधे ! ते तव, अद्भुतं आश्चर्य्यं, रूपं, अहं कदा वीक्षे॥१०९॥ शार्दूलविक्रीड़ितंवृत्तम्॥ अयि ईश्वरि ! सखि निवासः सखीषु निवासः यस्य सः रसिकमौलि श्रीकृष्णः इत्यर्थः। त्वया इतः भयं इत स्त्रपा लज्जा इतः कुलंः, इतः यशः, इतः श्रीरित्यादि अखिलशृङ्खलामपिं हिनस्ति। मोहनाकाङ्क्षा मोहनस्य श्रीकृष्णस्यैव या आकाङ्क्षा तया, सगद्गदं सुबहुमुदीरितं 'क्रथं कथं' त्वं प्रहसितैः कदा म्रेढ्यसे आज्ञां करोषि॥११०॥ पृथ्वीवृत्तम्॥

---

हे कोटि शरद्चन्द्र वचने ! हे भूषणोज्ज्वल कम्बुकण्ठि ! हे पट्ट दुकूलवासिनी ! हे पट्ट दुकूलवासिनी ! आपके पादाम्बुशोभि श्रीनूपुर झंकृत हो रहे हैं, कोमल भुज कल्पलतास्थित कंकण संचालित हो रहे हैं एवं आपके कबरी स्थित मल्लिका माला के सौरभ से अलिकुल विह्वल हो रहे हैं, हे श्रीराधे ! आपके इस प्रकार रूपमाधुर्य्य का दर्शन मैं कब करूँगी ? ॥१०९॥ हे ईश्वरि ! सखीनिवास श्रीकृष्ण, आपके लिए भय, लज्जा, कुल, यश, श्री प्रभृति अखिल को छोड़ चुके हैं, अथच आप उन मोहन की प्राप्ति के लिए गद्गद

**श्यामे चाटुरुतानि कुर्वति सहालापान् प्रणेत्रीमया,**
**गृह्णाने च दुकूल पल्लवमहो हुङ्कृत्य मां द्रक्ष्यसि।**
**विभ्राणे भुजवल्लिमुल्लसितया रोम स्रजालङ्कृतां,**
**दृष्ट्वा त्वां रसलीन मूर्त्तिमथ किं पश्यामि हास्यं ततः।।१११।।**
**अहो रसिकशेखरः स्फुरति कोऽपि वृन्दावने,**
**निकुञ्ज नवनागरी कुचकिशोर केलिप्रियः।**

---

अहो–आश्चर्य्ये, श्यामे चाटुरुतानि कुर्वति सहालापान् प्रणत्री श्रीकृष्णे चाटुवाक्यानि कुर्वति त्वं तेन सह आलापान् प्रणेत्रीकर्त्री तदा, मयादुकूलं पल्लवं वस्त्राञ्चलं, गृह्णाने च उल्लसितया भुजवल्लीं विभ्राणे हुङ्कृत्य मां कदा द्रक्ष्यसि क्रोधदृष्ट्यैवेति भावः। अथ अनन्तरं, त्वां रोमस्रजालङ्कृतां रोमावलीशोभितां, रसलीनमूर्त्ति रसे श्रीकृष्णे लीनामूर्त्तिर्यस्याः तां, गाढ़ालिङ्गनेनेति भावः, दृष्ट्वा अहं ततः किं हास्यं पश्यामि? ॥१११॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो–आश्चर्य्ये, वृन्दावने कोऽपि अनिर्वचनीयः निकुञ्ज नवनागरी कुचकिशोर केलिप्रियः निकुञ्जेषु या नवनागर्य्य स्तासां कुचैरेव किशोर केलिः मर्दनादि सैव प्रियायस्य सः, सखी प्रकटपूर्ण

---

वाक्य से प्रहास के साथ 'किस प्रकार किस प्रकार' कहकर कब मुझसे पुनः–पुनः जिज्ञासा करोगी ? ॥११०॥ अहो ! श्रीकृष्ण–चाटुवाक्य से तोषामोद करने से आप जब उनके साथ रहस्यालाप में निविष्ट होयेंगी, उस समय मैं आपके वस्त्रांचल का स्पर्श करने से एवं उल्लास से आपकी भुजलता का स्पर्श करने से आप हुँकार द्वारा मेरे प्रति क्रोध दृष्टि से देखेंगी ? अनन्तर आपको रोमावली शोभिता तथा रसलीन मूर्त्ति को देखकर आपकी हास्य माधुरी का मैं दर्शन क्या करूँगी ? ॥१११॥ अहो ! निकुञ्ज में नवनागरीगण के साथ कैशोरोचित विलास ही जिनका प्रिय है एवं सखीगण को प्रकाश्यरूप में प्रणति करना ही जिनका सम्पूर्ण उत्सव है अर्थात्

**करोतु स कृपां सखी प्रकट पूर्णनत्युत्सवो,**
**निजप्रियतमा पदे रसमयेऽदधद् यः शिरः।।११२।।**
**विचित्र वर भूषणोज्ज्वल दुकूलसत् कञ्चुकैः,**
**सखीभिरिति भूषिता तिलकगन्धमाल्यैरपि।**
**स्वयञ्च सकलाकलासु कुशलकृता नः कदा,**
**सुरास मधुरोत्सवे किमपि वेशयेत् स्वामिणी।।११३।।**
**कदा सुमणि किङ्किणी वलय नुपुर प्रोल्लस,**
**न्महा मधुर मण्डलाद्भुत विलास रासोत्सवे।**

---

नत्युत्सवः सखीषु प्रकटा पूर्णानतिरेव उत्सवो यस्य सः। सर्वाः सखीः निःसङ्कोचेन यः प्रणमतीति भावः, सरसिकशेखरः श्रीकृष्णः, कृपां करोतु रसमये निज प्रियतमापदे स्थितिं ददातु निजप्रियतमा श्रीराधा तस्याः रसपूर्णे पदे स्थितिं ददातु॥११२॥ पृथ्वीवृत्तम्॥

विचित्र वर भूषणोज्ज्वल दुकूल सत्कञ्चुकैः तिलक गन्धमाल्यैः सखीभिरिति भूषिता च स्वयं सकलकलासु कुशलीकृता नृत्यगीतवाद्यादि समस्ताः कलाविद्या विषये स्वयमेव सुशिक्षिता, स्वामिनी मदीश्वरी श्रीराधा, नः सखीनाम् अस्माकम्, सुरास मधुरोत्सवे सुष्ठौ एव रासे यन्मधुरोत्सव स्तस्मिन्, कदा किमपि वेशयेत् प्रवेशं कुर्य्यात्॥११३॥ पृथ्वीवृत्तम्॥

---

आनन्दमय आचरण है, वह रसिकशेखर श्रीकृष्ण श्रीवृन्दावन में अनिर्वचनीय रूप में स्फूर्त्ति प्राप्त हो रहे हैं, आप ऐसी कृपा करें कि जिससे उनकी प्रियतमा श्रीराधा के रसमय श्रीचरण-कमल के समीप में मेरी स्थिति हो॥११२॥ जो सखीगण द्वारा विचित्र वरभूषण, उज्ज्वल दुकूल, उत्कृष्ट कञ्चुलिका, तिलक, गन्धमाल्यादि द्वारा विभूषिता एवं नृत्य गीतवाद्यादि समस्त कलाविद्या विषय में स्वयं ही सुशिक्षिता हैं, वह स्वामिनी श्रीराधा हमारे सुन्दर मधुर रासोत्सव् में कब सम्मिलित होंगी॥११३॥ उत्कृष्ट मणिमय किंकिणी,

**अपि प्रणयिनो बृहद्भुज गृहीत कण्ठ्योवयं,**
**परं निजरसेश्वरी चरणलक्ष्मी वीक्षामहे॥११४॥**
**यद् गोविन्द कथा सुधारसह्रदे चेतोमयाजृम्भितं,**
**यद्वातद्गुणकीर्त्तनार्च्चन विभूषाद्यै र्दिनं प्रापितम्।**
**यद्यत् प्रीतिरकारि तत् प्रियजनेष्यात्यन्तिकी तेन मे,**
**गोपेन्द्रात्मज जीवन प्रणयिनी श्रीराधिका तुष्यतु॥११५॥**

---

सुमणिकिङ्किणी वलय नूपुर प्रोल्लसन् महामधुर मण्डलाद्भुतविलास रासोत्सवे प्रणयिणो प्रियतमस्य श्रीकृष्णस्य, बृहद् भुज गृहीत कण्ठ्योऽपि बृहद्भुजाभ्यां गृहीतः कण्ठः यासां तदपि, वयं परं केवलं, निजरसेश्वरीचरणलक्ष्म स्वस्य रसस्य ईश्वरी श्रीराधा तस्याः सव्यापसव्ययोः पादयोः ऊनविंशति चिह्नानि, कदा वीक्षामहे॥११४॥ पृथ्वीवृत्तम्॥ मया गोविन्दकथा सुधारस ह्रदे यच्चेतो जृम्भितं विस्तारकृतोऽभवत्, वा तद्गुणार्चनविभूषणा-द्यैर्यद्दिनं प्रापितं वा तत्प्रियजनेषु भगवद्भक्त जनेषु, यत् यत् आन्तन्तिकी प्रीतिरकारि तेन मे मम, गोपेन्द्रात्मज जीवन प्रणयिणी गोपेन्द्रनन्दः तस्यात्मजः, श्रीकृष्णस्तस्य जीवन प्रणयिणी, श्रीराधिका तुष्यतु तुष्टा भवतु॥११५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

वलय-नूपुररणित महामधुर मण्डल में अद्भुत विलास रासोत्सव में प्रियतम श्रीकृष्ण के वृहद् भुजदण्डद्वय द्वारा गृहीत कण्ठा होकर भी कब हम सभी केवल निजरसेश्वरी श्रीराधा के श्रीचरण-युगल के ऊनविंशति चिह्न का ही दर्शन कर सकेंगी ? ॥११४॥ श्रीकृष्ण कथारूप सुधाह्रद में जिस चित्त का विस्तार किया गया है, उनके गुण-कीर्त्तन-अर्चन विभूषणादि के द्वारा जो सुदिन हुआ है, किंवा उनके प्रियजन के प्रति जो प्रीति का आचरण हुआ है, उन सबके द्वारा गोपेन्द्रनन्दन श्रीकृष्ण की जीवन प्रणयिनी श्रीराधिका सन्तुष्ट होवें॥११५॥

**रहोदास्यं तस्याः किमपि वृषभानोर्व्रजवरी,**
**यसः पुत्र्याः पूर्ण प्रणय रसमुर्त्तेर्यदि लभे।**
**तदा नः किं धर्मैः किमु सुरगणैः किञ्च विधिना,**
**किमीशेन श्यामप्रियमिलनयत्नैरपि च किम्॥११६॥**
**चन्द्रास्ये हरिणाक्षि देवि सुनसे शोणाधरे सुस्मिते,**
**चिल्लक्ष्मीभुजवल्लि कम्बुरुचिर ग्रीवे गिरीन्द्रस्तनि।**

---

अहं तस्याः पूर्ण प्रणयरसमूर्त्तेः ब्रजवरीयसः ब्रजाधिपस्य, वृषभानोः पुत्र्याः श्रीराधायाः, किमपि रहोदास्यं-कैङ्कर्य्यं, यदि लभे तदा नः अस्माकं धर्मैः इष्टापूर्त्तादिभिः किम् किं प्रयोजनमित्यर्थः, सुरगणैः किं च विधिना किं वेदविधिना किं तेनापि प्रयोजनं नास्तीत्यर्थः। ईशेन किं ईशः सर्वेषां नियन्तातेनापि किम्। च श्यामप्रिय मिलन यत्नैरपि किम् श्यामप्रियः श्रीकृष्णभक्तः तन्मिलनयत्नैरपि क्रिं प्रयोजनं नास्तीति तात्पर्य्यं॥११६॥ शिखरिणीवृत्तम्॥

हे चन्द्रास्ये !, हे चन्द्रवदने !, हे हरिणाक्षि !, हे देवि !, हे सुनसे सुष्ठुश्चासौ नास यस्याः !, हे तथाविधे !, हे शोणाधरे रक्तवर्णश्चासौ अधरः यस्याः !, हे तथाविधे !, हे सुस्मिते !, हे चिल्लक्ष्मी भुजवल्लि। श्रीयुक्ताभुजवल्ली यस्याः हे तथाविधे !, हे कम्बुरुचिरग्रीवे !, हे गिरीन्द्रस्तनि !, गिरीन्द्र सुमेरीरिव वर्ण वर्त्तुलताविशिष्टै। स्तनौ यस्याः, हे तथाविधे !, हे भञ्जन् मध्यवृहन्नितम्बे भञ्जन् मध्यत्वेन कटौ कृशता सहितं वृहन्नितम्बं यस्याः तत् सम्बोधनम्, हे कदली खण्डोरु !, हे पादाम्बुज प्रोन्मीलन्नस्वचन्द्र मण्डलि !, चरणकदलयोः प्रोन्मीलन् नखचन्द्रानां

---

यदि मैं पूर्ण प्रणयरसमूर्त्ति ब्रजाधिप वृषभानुराजपुत्री श्रीराधा का दास्य किंकरीत्व प्राप्त कर सकूँ, तब धर्म, देवत्व विधि, ईश, कृष्णभक्त संगलाभ की चेष्टा आदि का कुछ प्रयोजन नहीं है॥११६॥ हे चन्द्रानने !, हे हरिणाक्षि !, हे देवि !, हे सुनासिके !,

**भज्यन्मध्य बृहन्नितम्ब कदली खण्डोरुपादाम्बुजे,**
**प्रोन्मीलन्नखचन्द्रमण्डलि कदा राधे मयाराध्यसे।।११७।।**
**राधापादसरोजभक्तिमचला मुद्वीक्ष्य निष्कैतवां,**
**प्रीतः स्वं भजतोऽपि निर्भरमहाप्रेम्णाधिकं सर्व्वशः।**
**आलिङ्गत्यथ चुम्बति स्ववदनात्ताम्बूलमास्येऽर्पयेत्,**
**कण्ठे स्वां वनमालिकामपि मम न्यस्येत्कदा मोहनः।।११८।।**
**लावण्यं परमाद्भुतं रतिकलाचातुर्य्यमत्यद्भुतम्,**
**कान्तिः कापि महाद्भुता वरतनोर्लीलागतिश्चाद्भुता।**
**दृगभङ्गी पुनरद्भुताद्भुततमा यस्याः स्मितं चाद्भुतं,**
**सा राधाद्भुतमूर्त्तिरद्भुत रसं दास्यं कदा दास्यति।।११९।।**

---

मण्डलि र्यस्याः तस्याः सम्बोधनम्, हे श्रीराधे ! मया कदा आराध्यसे? ॥११७॥ शार्दूलविक्रीड़ितंवृत्तम्॥

मोहनः श्रीकृष्णः, निष्कैतवां कैतवरहितां, अचलां राधापाद सरोजभक्ति उद्वीक्ष्य आलोक्य, स्वं भजतोऽपि प्रीतः सद्निर्भराधिकं अत्यन्ताधिकं; महाप्रेम्ना, सर्वशः कदा आलिङ्गति अथचुम्बति अथस्ववचनात् मम आस्ये वदने ताम्बूलं कदा अर्पयेत् स्वां वनमालिकामपि मम कण्ठे कदा न्यसेत्।।११८।। शार्दूलविक्रीड़ितंवृत्तम्॥

यस्याः वरतनोः लावण्यं परमाद्भुतं, रतिकला चातुर्य्यं अत्यद्भुतं, कान्तिः कापि अनिर्वचनीया महाद्भुता, लीलागतिश्च

---

हे शोणाधरे !, हे सुस्मिते !, हे श्रीभुजवल्लि !, हे कम्बुरुचिरग्रीवे!, हे गिरीन्द्रस्तनि !, हे क्षीणमध्ये वृहन्नितम्बे !, हे कदली खण्डोपम उरुशालिनी !, हे श्रीचरणकमले उद्भासित नखचन्द्रमण्डलभूषिते!, हे श्रीराधे ! मैं कब आपकी आराधना करूँगी ? ॥११७॥ मोहन श्रीकृष्ण, श्रीराधा पादाम्बुज में मेरी अकैतवा अविचला भक्ति को देखकर प्रसन्नता से मुझे प्रसादी ताम्बुल कब प्रदान करेंगे ? एवं प्रसादी वनमाला दान कब करेंगे ? ॥११८॥ जिनके लावण्य

**भ्रमद् भ्रुकुटि सुदरं स्फुरित चारु बिम्बाधरं,**
**ग्रहे मधुर झङ्कृतं प्रणयकेलि कोपाकुलम्।**
**महारसिक मौलिना सभय कौतुकं वीक्षितं,**
**स्मरामि तव राधिके रतिकलासुखं श्रीमुखम्॥१२०॥**
**उन्मीलन्मुकुटच्छटा परिलसद्दिक् चक्रवालं स्फुरत्,**
**केयूराङ्गदहार कङ्कण घटा निर्धूत रत्नच्छवि।**

---

अद्भुता, पुनः दृग्भङ्गी भ्रूभङ्गी, अद्भुताद्भुततमा, स्मितञ्च अद्भुतं, सा अद्भुतमूर्त्तिः राधा अद्भुतरसं दास्यां कदादास्यति॥११९॥ शार्दूलविक्रीड़ितंवृत्तम्॥ हे राधिके ! अहं तव भ्रमद् भ्रुकुटि सुन्दरं भ्रमन्ती या भ्रुकुटी तया सुन्दरं यत्, स्फुरित चारुबिम्बाधरं स्फुरितं मनोहरं बिम्बवदधरं यस्मिन् तत्, ग्रहे मधुरं हुङ्कृतं ग्रहणे मधुरं हुङ्कृत यस्मिन् तत्, प्रणयकेलि कोपाकुलं, महारसिक मौलिना श्रीकृष्णेन, सभयं कौतुकं वीक्षितं दृष्टं, रतिकलासुखं श्रीमुखं स्मरामि॥१२०॥ पृथ्वीवृत्तम्॥ भो मनः ! त्वं उन्मीलन् मुकुटच्छटा परिलसद् दिक् चक्रवालं प्रकाशिता याः मुकुटस्य च्छटाः ताभिः विलसितं दिङ्मण्डल यत्र तत् स्फुरत् केयूराङ्गदहार कङ्कण घटाः निर्धूतरत्नच्छवि प्रकाशमाणाः याः केयूराङ्गद हार कङ्कणानाङ्घटाः ताभिः निर्धूता खण्डिता रत्नानां च्छवि र्यस्मात्

---

परमाद्भुत, रतिकला चातुर्य्य अत्यन्त अद्भुत, कान्ति, अनिर्वचनीय महाद्भुता, लीलागति अद्भुता एवं नयनभंगी अद्भुत से भी अद्भुततमा एवं जिनका मृदुहास्य भी अद्भुत है, वे अद्भुतमूर्त्ति श्रीराधा कब मुझे अद्भुत हास्य दान करेंगी॥११९॥ हे श्रीराधिके ! मैं आपकी घूर्णित सुन्दर भ्रूभंगी, चारु बिम्बाधरशोभी मधुर हुँकारयुक्त, प्रणयकेलि कोपाकुल, रसिकमौलि श्रीकृष्ण के द्वारा भय से एवं कौतुक से दृष्ट रतिकला सुखद श्रीमुख का स्मरण करती हूँ॥१२०॥ जिनके उन्मीलित मुकुट की च्छटा से दिग्मण्डल विलसित है, जिनके केयूर अंगदहार कंकण की घटा रत्नच्छवि की निर्धूत किया है, जिनके नितम्बदेश में किङ्किणी को कलध्वनि एवं

**श्रोणी मण्डल किङ्किणीकलरवं मञ्जीरमञ्जुध्वनि,**
**श्रीमत् पादसरोरुहं भजमनो राधाभिधानं महः।।१२१।।**
**श्यामामण्डल मौलिमण्डनमणिः श्यामानुरागस्फुर,**
**द्रोमोद्भेद विभाविताकृतिरहो काश्मीर गौरच्छविः।**
**सातीवोन्मद कामकेलि तरला मां पातु मन्दस्मिता,**
**मन्दारद्रुमकुञ्जमन्दिरगता गोविन्द पट्टेश्वरी।।१२२।।**
**उपास्यचरणाम्बुजे ब्रजभृतां किशोरीगणै,**
**र्महद्भिरपि पूरुषैरपरिभाव्य भावोत्सवे।**

---

तत्, श्रेणीमण्डल किङ्किणी कलरवं यन्नितम्बदेशे किङ्किणीनां कलरवं तत्। मञ्जीरमञ्जुध्वनि श्रीमत् पाद सरोरुहं मञ्जीराणां मञ्जुकोमलं ध्वनिरेव श्रीयुक्तचरणकमले यस्य तत्, राधानिधानं महः भजे॥१२१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो ! या श्यामामण्डल मौलि मण्डनमणिः श्यामा गोपाङ्गणानां शिरोमणिस्वरूपा। श्यामानुराग स्फुरद्रोमोद्भेद विभाविताकृतिः, श्यामं श्रीकृष्णं प्रति योऽनुरागस्तेन स्फुरत् यः रोमोद्भेदविभाविताकृतिर्यस्याः सा, काश्मीर गौरच्छविः कुड्कुमादपि गौरकान्तिर्यस्याः साः अतीव उन्मदकामकेलि तरला अत्यन्तमुन्मदस्य कामस्य या केलिः आभिः चञ्चलीकृता मन्दस्मिता मृदुहास्ययुक्ता, सा मन्दार द्रुमकुञ्ज मन्दिरगता कल्पतरु कुञ्जतः मन्दिर प्राप्ता, गोविन्द पट्टेश्वरी श्रीराधा, मां पातु रक्षतु॥१२२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

श्रीपदकमल में नूपुरों की मधुरध्वनि शंकित हो रही है। हे मन ! श्रीराधाभिधान महः का भजन करो॥१२१॥ अहो ! जो श्यामा गोपांगनागण के शिरोभूषणमणिस्वरूपा हैं, जिनके श्रीअंग श्यामानुराग हेतु विकसित रोमाञ्च द्वारा विभाषित हैं, जिनकी कान्ति कुंकुम गौर है एवं जो अत्यन्त उन्मदप्रद कन्दर्पकेलि द्वारा विचलिता है, मृदुहास्य, कल्पकुञ्जमन्दिरगता उन श्रीगोविन्द पट्टेश्वरी श्रीराधा मेरी रक्षा करें॥१२२॥

**अगाधरसधामनि स्वपदपद्मसेवाविधौ,**
**विधहि मधुरोज्ज्वलामिव कृतिं ममाधिश्वरि॥१२३॥**
**आनम्राननचन्द्रमीरित दृगापाङ्गच्छटामन्थर,**
**किञ्चिद्दर्शिशिरोऽवगुण्ठनपटं लीलाविलासावधिम्।**
**उन्नीयालकमञ्जरीः कररुहैरालक्ष्य सन्नागर,**
**स्याङ्केऽङ्गं तव राधिके सचकितालोकं कदा लोकये॥१२४॥**

---

हे ब्रजभृतां किशोरीगणैरुपास्य चरणाम्बुजे ! ब्रजमुख्याणां याः किशोर्य्याः ललिता विशाखाद्याः तासां गणैः उपासनीयं चरणकमलं यस्याः हे तथाविधे, हे महद्भिः पुरुषैरपि अपरिभाव्य भावोत्सवे ! नारदादिभिः महद्भिः पुरुषैरपि न परिभाव्यं भावोत्सवं यस्याः हे तथाविधे ! हे अधिश्वरि ! त्वं अगाध रसधामनि स्व पादपद्म सेवाविधौ मम मधुरोज्ज्वलामिव कृतिं विधेहि॥१२३॥ पृथ्वीवृत्तम्॥

हे श्रीराधिके ! सन्नागरस्याङ्के अङ्गं आलक्ष्य सन्नागरः श्रीकृष्णः कररुहैः स्वनखैः, तव अलक मञ्जरी केशकलापं, उन्नीय उन्नयनं कृत्वा, तस्याङ्के तवाङ्गं मिलितं परस्परालिङ्गनवद्ध दृष्ट्वा, तव आनम्रमानन चन्द्रं ईषन्नम्रवदनमेवचन्द्रो यस्मिन् तत्, ईरितदृगङ्गच्छटामन्थरं, प्रेरिताः ये दृगापाङ्गा कटाक्षः तेषां याच्छटास्तैः मन्दं, किञ्चिद्दर्शि शिरोवगुष्ठन पटं किञ्चित् प्रदर्शितं शिरः अवगुठन पटात् यस्मिन् तत्, लीलाविलासावधिं सचकितालोकं चमत्कार सहितं तवालोकनं, कदा लोकये पश्यामि॥१२४॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

हे अधीश्वरी ! आपके श्रीचरणकमल, ललितादि मुख्या ब्रजकिशोरीगणों के नित्य उपास्या हैं एवं आपका भावोत्सव नारदादि महापुरुषों का भी अपरिभाव्य हैं। हे श्रीराधे ! उस अगाध रसनिलयस्वरूप आपके पदकमल की मधुरोज्ज्वल सेवा में रत होने के लिए मुझ पर कृपा करो॥१२३॥ हे श्रीराधिके ! नागरवर

**राकाचन्द्रो वराको यदनुपमरसानन्दकन्दाननेन्दो,**
**स्तत्तादृक्चन्द्रिकाया अपि किमपि कणामात्रकस्याणुतोऽपि।**
**यस्याः शोणाधर श्रीविधृत नवसुधा माधुरी सारसिन्धुः,**
**सा राधा काम बाधा विधुर मधुपति प्राणदा प्रीयतां नः।।१२५।।**
**राकानेकविचित्रचन्द्र उदितः प्रेमामृत ज्योतिषां,**
**वीचीभिः परिपूरयेदगणित ब्रह्माण्डकोटिं यदि।**
**वृन्दारण्य निकुञ्ज सीमनि तदाभासः परं लक्ष्यसे,**
**भावेनैव यदा तदैव तुलये राधे तव श्रीमुखम्।।१२६।।**

---

यस्याः अनुपम रसानन्दकन्दानेनेन्दोः तत् तादृश चन्द्रिकायाः अपि किमपि कलामात्रस्याणुतापि राकाचन्द्रो वराकः, अनुपम रसानन्दस्य कन्दः मूलस्वरूपः तदाननमेव इन्दुः चन्द्रः तस्य तत्तादृक् चन्द्रिकायाः किमपि अनिर्वचनीय कलामात्रकः तस्य अनुतापि राकाचन्द्रः पूर्णचन्द्रः वराकः तुच्छः, यस्याः शोणाधरः श्रीविधृत नवसुधा माधुरी सारसिन्धुः, सा काम बाधा विधुर मधुपतिः, श्रीकृष्णस्य, प्राणदा राधा नः अस्माकं प्रीयतां प्रसन्ना भवतु॥१२५॥ स्रग्धरा॥

हे राधे ! यदा राकानेक विचित्रचन्द्रः उदितः सन् प्रेमामृत ज्योतिषां वीटीभिः अगणित ब्रह्माण्ड कोटिं यदि परिपूरयेत्, वृन्दारण्य निकुञ्ज सीमनि तत् आभासः लक्ष्यसे। परं केवलं, भावेनैव

---

श्रीकृष्ण के अंग में आपका अंग मिलित अर्थात् परस्पर के आलिंगन बद्ध देखकर मैं कब निज करनख समूह के द्वारा आपकी अलका मञ्जरी का प्रसाधन कर, आनम्रवदनचन्द्रे, ईषत् नयनापांगच्छटा, किंचित्दर्शि मस्तक में अवगुण्ठन वस्त्र एवं सचकित अवलोकन का दर्शन करूँगी ? ॥१२४॥ पूर्णचन्द्र, जिनके अनुपम रसानन्दकन्द वदनचन्द्र की किरणकणा के तुल्य भी नहीं है, जिनके अरुणाधर, श्रीविधृत नवसुधा माधुरी का सारसिन्धु है, कामबाधा विधुर मधुपति श्रीकृष्ण की जीवनदायिनी वह श्रीराधा मेरे प्रति प्रसन्न होवें॥१२५॥

हे श्रीराधे ! एक समय में विचित्र अनेक चन्द्र उदित होने से उसकी प्रेमामृत ज्योति तरंग से यदि अनन्तकोटि ब्रह्माण्ड

**कालिन्दीकुल कल्पद्रुमतलनिलय प्रोल्लसत् केलिकन्दा,**
**वृन्दाटव्यां सदैव प्रकटतररहोवल्लवीभावभव्या।**
**भक्तानां हृत् सरोजे मधुर रससुधा स्यन्दिपादारविन्दा,**
**सान्द्रानन्दाकृति र्नः स्फुरतु नवनव प्रेमलक्ष्मीरमन्दा॥१२७॥**
**शुद्ध प्रेमैक लीलानिधि रहहमहातङ्कमङ्कस्थिते च,**
**प्रेष्ठे विभ्रत्यदभ्रस्फुरदतुल कृपास्नेह माधुर्य्यमूर्त्तिः।**

---

तव श्रीमुखं अहं तदैव तुलये समतां नयामि॥१२६॥ शार्दूलविक्रीड़ितंवृत्तम्॥

कालिन्दीकूल कल्पद्रुमतलनिलयः भवनः तत्र प्रोल्लसन्ती या केलिः तस्याः मूलस्वरूपा, वृन्दाटव्यां सदैव प्रकटतर रहोवल्लवी-भावभव्या वृन्दावने सर्वदैव प्रकाशमाना या रहोवल्लव्योः ललिता-विशाखाद्याः तासां भावभव्या भावयोग्या इत्यर्थः, भक्तानां हृत् सरोजेमधुर रससुधास्यन्दि पादारविन्दा तद्भक्तानां हृदयकमले मधुररस एव सुधास्रावी पदकमले यस्याः सा, सान्द्रानन्दाकृतिः निविड़ानन्दमूर्त्तिः, अमन्दा नवनव प्रेमलक्ष्मीः, विशुद्ध नित्याभिनव प्रेम्नोलक्ष्मीः स्वरूपा श्रीराधा, नः अस्माकं स्फुरतु हृदये आविर्भवतु ॥१२७॥ स्रग्धरावृत्तम्॥

अहह अत्यदभ्र, शुद्ध प्रेमैक लीलानिधिः प्रेष्ठे अङ्कस्थितेऽपि

---

परिपूर्ण हो जाता है, तथापि इस श्रीवृन्दावन निकुञ्ज सीमा में आपके श्रीमुख माधुरी का आभास ही प्रतीत होगा, अतएव केवल भाव के द्वारा ही मैं आपके श्रीमुख की तुलना चन्द्र के साथ कर रही हूँ॥१२६॥

जो श्रीयमुनातीरवर्त्ति कल्पतरुतलस्थित भवन प्रोल्लसित केलि विलास का मूलस्वरूपा है, श्रीवृन्दावन में सर्वदा प्रकाशमाना रह वल्लवी ललितादि के भावविभाविता हैं एवं भक्तगण के हृदय कमल में मधुर रससुधास्रावी पादारविन्द विशिष्टा हैं, उन सान्द्रानन्द मूर्त्ति अमन्दा नित्याभिनव प्रेमलक्ष्मी श्रीराधा मेरे हृदय में स्फुरित होवें॥१२७॥ जो विशुद्ध प्रेमलीलानिधि, आश्चर्य यह है कि-प्रियतम

**प्राणाली कोटिनिराजित पद सुषमा माधुरी माधवेन,**
**श्रीराधा मामगाधामृतरसभरिते कर्हिदास्येऽभिषिञ्चेत्॥१२८॥**
**वृन्दारण्य निकुञ्जसीमसु सदा स्वानङ्गरङ्गोत्सवै,**
**र्म्माद्यन्त्यद्भुत माधवाधरसुधा माध्वीक संस्वादनैः।**
**गोविन्द प्रियवर्ग दुर्गमसखी वृन्दैरनालक्षिता,**
**दास्यं दास्यति मे कदा नु कृपया वृन्दावनाधिश्वरी॥१२९॥**

---

सति महातङ्कविभ्रति अङ्कस्थितोऽपि प्रेष्ठः प्रियतमः श्रीकृष्णः यदि वियुक्तो भवेदिति महातङ्कं धारयन्ती या सा, च अदभ्रस्फुरदतुल कृपास्नेह माधुर्य्यं तन्मूर्त्ति र्यस्याः सा, माधवेन प्राणाली कोटि नीराजित पदसुषमा माधुरी माधवेन श्रीकृष्णेन च प्राणसखी कोटिभिः नीराजितं यत् पदं तत्र या सुषमा शोभा तन्माधुर्य्यं यस्यां सा श्रीराधा अगाधामृतरसभरिते दास्ये मां कर्हि अभिसिञ्चेत्॥१२८॥ स्रग्धरावृत्तम्॥ वृन्दावन निकुञ्ज सीमसु सदैव स्वानङ्ग रङ्गोत्सवैः स्वस्य अनङ्गस्य ये रङ्गाः तेषां ये उत्सवाः ते विद्यन्ते येषु तैः, अद्भुतं माधवाधर सुधामाध्वीकं संस्वादनैः अद्भुता या श्रीकृष्णाधरसुधासैव माध्वीकं मद्यं, तस्य पुनः पुनः आस्वादनैः, माद्यन्ती मदमत्ता एव तिष्ठति या सा, गोविन्द प्रियवर्ग दुर्गम

---

अंक में होते हुए भी उनके विच्छेद की आशंका से जो भी होता है, जो प्रचुर प्रकाशमान् अतुलकृपा स्नेह माधुर्य की मूर्त्ति हैं एवं श्रीकृष्ण तथा कोटि प्राणसखी के द्वारा नीराजित श्रीचरण सुषमा माधुरी विशिष्टा हैं, वह श्रीराधा अगाधामृत रसपूर्ण दास्यता में मुझे कब अभिषिक्त करेंगी ? ॥१२८॥

जो श्रीवृन्दावन की निकुञ्ज सीमा में स्वानंग रंगोत्सव में अद्भुत माधवाधर सुधारूप माध्वीक का आस्वादन कर मदमत्ता की भाँति अवस्थान करती हैं एवं श्रीगोविन्द के प्रियवर्ग के दुरधिगम्य,

**मल्लीदाम निबद्ध चारुकवरं सिन्दूररेखोल्लसत्,**
**सीमन्तं नवरत्नचित्र तिलकं गण्डोल्लसत् कुण्डलम्।**
**निष्कग्रीवमुदारहारमरुणं विभ्रद्दुकूलं नवं,**
**विद्युत् कोटिनिभं स्मरोत्सवमयं राधाख्यमीक्षेमहः।।१३०।।**
**प्रेमोल्लासैकसीमा परमरसचमत्कार वैचित्रसीमा,**
**सौन्दर्य्यस्यैकसीमा किमपि नववयोरूप लावण्य सीमा।**

---

सखीवृन्दैरनालक्षिता, गोविन्दस्य प्रियवर्गः सखीसखाद्यस्तेषामपि दुर्गमो दुरधिगम्यो यस्याः सखीवृन्दः, तैरपि अनालक्षिता श्रीललितादि विना न कोपि लक्षयतीति भावः, वृन्दावनाधीश्वरी श्रीराधा, कृपयामे दास्यं कदा दास्यति ।।१२९।। शार्दूलविक्रीड़ितंवृत्तम्।।

अहं मल्लीदाम निबद्धचारु कवरं मल्लिका मालाभिर्निबद्धं चारु यथास्यात्तथा कवरं केशपाशो यस्य तत्, सिन्दूर रेखोल्लसत् सीमन्त, सिन्दूर रेखया शोभमानं सीमन्तं तत् यस्य तत्, गण्डोल्लसत् कुण्डलं कपोलयोः शोभमाने कुण्डले यस्य तत्, निष्कग्रीवं, स्वर्णपदकं ग्रीवायां यस्य तत्, उदारहारं, कण्ठे उदारः हारोयस्या तत्, नवमरुणं विभ्रद्दुकूलं नवारुणः प्रातः सूर्य्यस्तत् प्रभं क्षौमवस्त्रं धारयत् यत्तत्, विद्युत् कोटिनिभं कोटि तड़ित् प्रभायस्या तत्, स्मरोत्सवमयं सारः कन्दर्पः श्रीकृष्णः वा तदुत्सवमयं, राधाख्यं महः ईक्षे पश्यामि।।१३०।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

सखीगण के द्वारा अनालक्षिता हैं, वह वृन्दावनाधीश्वरी श्रीराधा कृपापूर्वक मुझे कब दास्यता प्रदान करेंगी ? ॥१२९॥ जिनकी मल्लिका माला निबद्ध चारु कवरी, सिन्दूर रेखोज्ज्वल सीमन्त, नवरत्न चित्रित तिलक, कुण्डलशोभी गण्ड, स्वर्णपदकशोभी ग्रीवा, महान् हार, प्रभात सूर्य की भाँति अरुण वर्ण का दुकूल, कोटि तड़ित् के समान अंगप्रभा, उन स्मरोत्सवमय राधाख्यमह का मैं दर्शन कर रही हूँ॥१३०॥

**लीलामाधुर्य्य सीमा निजजन परमौदार्य्य वात्सल्य सीमा,**
**सा राधा सौख्यसीमा जयति रतिकलाकेलि माधुर्य्य सीमा।।१३१।।**
**यस्यास्तत् सुकुमार सुन्दरपदोन्मीलन्नखेन्दुच्छटा,**
**लावण्यैकलवोपजीविसकलश्यामामणीमण्डलम्।**
**शुद्ध प्रेमविलास मूर्त्तिरधिकोन्मीलन्महामाधुरी,**
**धारासार धुरीणकेलि विभवा सा राधिका मे गतिः।।१३२।।**

---

सा प्रेमोल्लासैक सीमा, परमरस चमत्कार वैचित्र्य सीमा परम रसः मधुराख्य श्रेष्ठरसः तस्य चमत्कारस्य यद्वैचित्र्यम् तत्सीमा, सौन्दर्य्यस्यैक सीमा, लीलामाधुर्य्य सीमा, निजजन परमौदार्य्य वात्सल्य सीमा निजाः सखीजनाः तेषुः परमोदारतापूर्ण यद्वात्सल्यं तस्यापि सीमा, सौख्यसीमा च रतिकेलि सौन्दर्य्य सीमा राधा जयति॥१३१॥ स्रग्धरा॥ तत् सकल श्यामामणिमण्डलं तद्वृन्दावनस्थाः याः सकलाः श्यामाः गोपाङ्गनाः तासांमणीः श्रेष्ठाः ललिताद्यष्ट सखीः तासां यन्मण्डलगणं, यस्माः सुकुमार सुन्दरपदोन्मीलन्नखेन्दुच्छटा लावण्यै कलवोपजीवो यस्याः सुकोमल सुन्दर पदयोर्यत् प्रफुल्लित नखचन्द्रानांच्छटा तल्लावण्यैक लवलेशमात्रं जीवनं यासां तथाविधा, शुद्ध प्रेमविलास- मूर्त्तिः शुद्धं अप्राकृतं यत्प्रेम तस्य यो विलासः तस्य या मूर्त्तिः, च अधिकोन्मीलन्महामाधुरी धारासारधुरीण केलिविभवा

---

प्रेमोल्लास की सीमा, शृङ्गाररस चमत्कार वैचित्र्य की सीमा, सौन्दर्य्य की सीमा, अनिर्वचनीय नववयोरूप लावण्य की सीमा, लीलामाधुर्य की सीमा, निजजन के प्रति परमौदार्य वात्सल्य की सीमा, सौख्य सीमा एवं रतिकेलि माधुर्य की सीमारूपी श्रीराधा सर्वोत्कर्ष के साथ विराजित हैं।।१३१।। श्रीवृन्दावनस्था निखिल श्यामा रमणी की मणिस्वरूपा ललितादि, जिनके सुकोमल पदयुगल की उन्मीलित नखचन्द्र की च्छटा का लावण्य लवमात्र उपजीवी हैं एवं अत्यन्त उन्मीलित महामाधुरी धारासारधुरीय

**कलिन्दगिरिनन्दिनी सलिल बिन्दु सन्दोऽभृन्–**
**मृदूद्गतिरतिश्रमं मिथुनमद्भुतक्रीड़या।**
**अमन्दरसतुन्दिलं भ्रमरवृन्दवृन्दाटवी,**
**निकुञ्जवरमन्दिरे किमपि सुन्दरं नन्दति।।१३३।।**
**व्याकोशेन्दीवर विकसितामन्दहेमारविन्दं,**
**श्रीमन्निस्यन्दन रतिरसान्दोलि कन्दर्प केलि।**

---

अधिकोन्मीलन्ती या माधुरी तस्याः धारासारधारणे धुरीणः श्रीकृष्णस्तत्केलि एव विभवं यस्याः, सा राधिका मे गतिः भवतु॥१३२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अमन्द रसतुन्दिल भ्रमरवृन्द वृन्दाटवी निकुञ्जवर मन्दिरे अमन्दः उत्तमः रसः मधुररसस्तेन पूर्णः उदयोः यस्य तद् भ्रमरवृन्दैः समूहैराकीर्णः यद्वृन्दारण्यः तत्र यन्निकुञ्जः तस्मिन् यद् वरमन्दिरः तस्मिन्, कलिन्दगिरिनन्दिनी सलिल बिन्दु सन्दोहभृन् मृदुगतिश्रमं श्रीयमुनाजलबिन्दूनां सन्दोहं समूहं विभ्रत् यत् पवनमिति भावः तस्य मृदुना मृदुस्पर्शेन उद्गतिः अपसृतं बहुविहार जनितश्रमं यस्य तत् किमपि अनिर्वचनीयं, सुन्दरं मिथुनं श्रीराधाकृष्णयुगलं, अद्भुत क्रीड़या नन्दति आनन्दं प्राप्नोति॥१३३॥ पृथ्वीवृत्तम्॥

वृन्दारण्ये व्याकोशेन्दीवर विकसितामन्द हेमारविन्द श्रीमत् व्याकोशं प्रफुल्लितं यदिन्दीवरं नीलकमलं च विकसितं अमलं सुन्दरं

---

श्रीकृष्ण की केलि ही जिनका एकमात्र वैभव है, उन शुद्ध प्रेम विलासमूर्त्ति श्रीराधिका ही मेरी गति हैं॥१३२॥ अमन्द रसतुन्दिल भ्रमर समूहाकीर्ण वृन्दावनस्थ निकुञ्जवर मन्दिर में अनिर्वचनीय सुन्दर नागर–नागरी युगल, श्रीयमुना का सलिलकणावाही समीर के मृदुस्पर्श से रतिश्रम अपगत होने से अद्भुत क्रीड़ा विहार से आनन्दित हो रहे हैं॥१३३॥ श्रीवृन्दावन में प्रफुल्लित इन्दीवर व विकसित स्वर्णकमल का सम्मिलन शोभायुक्त, निःस्रवमान् रतिरस

**वृन्दारण्ये नवरससुधास्यन्दिपादारविन्दं,**
**ज्योतिर्द्वन्द्वं किमपि परमानन्दकन्दं चकास्ति॥१३४॥**
**ताम्बूलं क्वचिदर्पयामि चरणौ संवाहयामि क्वचि–**
**न्मालाद्यैः परिमण्डये क्वचिदहो संबीजयामि क्वचित्।**
**कर्पूरादि सुवासितं क्वच पुनः सुस्वादुचाम्भोऽमृतं,**
**पायाम्येव गृहे कदा खलु भजे श्रीराधिकामाधवौ॥१३५॥**

---

यत् हेमारविन्दं स्वर्णकमलं तयो र्यो श्रीस्तद्युक्तं, निःस्यन्दन रतिरसान्दोलिकन्दर्पकेलि निःस्रवमानः यद्रतिरसः तस्यान्दोलनकारी कन्दर्पकेलि यत्र तत्, नवरससुधास्यन्दि पादारविन्दं शृङ्गारादयः नवरसाः तदेव अमृतरूपा, स्तन्निःस्यन्दि पादारविन्दं यस्य तत् किमपि परमानन्दकन्द अनिर्वचनीयं यत् परमानन्दं तस्य उत्पत्ति स्थानं, ज्योतिर्द्वन्द्वं ज्योतिरूपं द्वयं श्रीराधाकृष्ण युगलं, चकास्ति प्रकाशमानं तिष्ठति॥१३४॥ मन्दाक्रान्तावृत्तम्॥

अहो आश्चर्य्ये, अहं क्वचित् ताम्बूलं अर्पयामि, क्वचित् चरणौ सम्बाहयामि, क्वचित् मालाद्यैः परिमण्डये गन्धमाल्यभूषणाद्यैः परिशोभये, क्वचित् संबीजयामि ताप प्रशमनार्थं बीजनं करिष्यामि, पुनश्च क्वचित् कर्पूरादिषु वासितं सुस्वादु अम्भोमृतं सलिलसुधां, पायामि पानं कारयामि, इत्येवं रूपेण गृहे निकुञ्ज भवने, श्रीराधिका माधवौ कदाखलु निश्चयेन भजे सेवनं करिष्ये॥१३५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

का आन्दोलनकारी कन्दर्पकेलि समन्वित है, वह नवरस सुधास्यन्दि पादारविन्द विशिष्ट अनिर्वचनीय परमानन्दकन्द ज्योतिर्द्वन्द्व प्रकाशित हैं॥१३४॥

अहो ! मैं कब ताम्बूल अर्पण करूँगी एवं श्रीचरणद्वय का सम्बाहण करूँगी तथा माल्यादि के द्वारा भूषित करूँगी एवं बीजन करूँगी तथा कर्पूरादि वासित सुस्वादु सलिलामृत का पान कराऊँगी, इस प्रकार से मैं कब निकुञ्ज गृह में श्रीराधामाधव की सेवा करूँगी ? ॥१३५॥

**प्रत्यङ्गोच्छलदुज्ज्वलामृतरस प्रेमैक पूर्णाम्बुधि-**
**र्लावण्यैक सुधानिधिः पुरुकृपावात्सल्यसाराम्बुधिः।**
**तारुण्यप्रथमप्रवेशविलसन्माधुर्य्यसाम्राज्यभू-**
**र्गुप्तः कोऽपि महानिधिर्विजयते राधारसौकावधिः॥१३६॥**
**यस्याः स्फूर्जत् पदनखमणि ज्योतिरेकच्छटायाः,**
**सान्द्राप्रेमामृतरसमहासिन्धुकोटि विलासः।**

---

प्रत्यङ्गोच्छलत् उज्ज्वलामृतरसप्रेमैक पूर्णाम्बुधिः प्रतिअङ्गे उत्सिच्चमानः यदुज्ज्वलामृतरसः शृङ्गारः रसः तस्य प्रेमैक पूर्णसमुद्रः, लावण्यैक सुधानिधिः, लावण्यस्य एक एव सुधानिधिः, लावण्यस्य एक एव सुधानिधिः, ऊरुकृपा वात्सल्य साराम्बुधिः बहुकृपायाः यद्वात्सल्यं तस्मिन् यः सारस्तस्याम्बुधिः, तारुण्य प्रथम प्रवेश विलसन्माधुर्य्य साम्राज्यभूः यन्नवयौवनवयः सन्धिमाधुर्य्य तस्य यत् साम्राज्यं तस्यभूः उत्पत्ति स्थानम्, रसौकोवधिः रसस्य श्रीकृष्णस्य यत् ओकः आश्रयः तस्यावधिः सीमारूपः, कोऽपि गुप्त राधा महानिधिः विजयते सर्वोत्कर्षेण विद्यते॥१३६॥ शार्दूलविक्रीड़ितंवृत्तम् ॥ यस्याः स्फुर्ज्जत् पदनखमणि ज्योतिरेकच्छटायाः विलासः सान्द्रप्रेमामृतरसमहासिन्धु कोटिः प्रकाशमानाः ये पदनखमणिः तेषां यः ज्योतिः तस्य या एकाच्छटा, तस्याः योविलासः तस्मिन् यो सान्द्रः निविड़ः प्रेमामृतरसः तस्य ये महासिन्धवः, तेषां कोट्यः, असंख्यगणनेतिभावः, सा राधा

---

जो प्रति अंग में उच्छलित उज्ज्वलामृतरस प्रेम का एकमात्र पूर्णाम्बुधि, लावण्य का सुधानिधि, विपुल कृपावात्सल्य का साराम्बुधि नवयौवन विलसित माधुर्य्य साम्राज्य की भूमि, रसस्वरूप श्रीकृष्ण के आश्रय की अवधि हैं, उन श्रीराधानामक एक गुप्त महानिधि सर्वोत्कर्ष के साथ विराजित हैं॥१३६॥ जिनके प्रकाशमान् पदनखमणिज्योतिच्छटा का विलास निविड़ प्रेमामृत कोटिसिन्धु-

**सा चेद्राधा रचयति कृपादृष्टिपातं कदाचि-**
**न्मुक्तिस्तुच्छी भवति बहुशः प्राकृताप्राकृत श्रीः।।१३७।।**
**कदा वृन्दारण्ये मधुर मधुरानन्दरसदे,**
**प्रियेश्वर्य्याः केलिभवननवकुञ्जानि मृगये।**
**कदा श्रीराधाया पदकमलमाध्वीकलहरी,**
**परीवाहैश्चेतो मधुकरमधीरं मदयिता।।१३८।।**
**राधाकेलि निकुञ्ज वीथिषु चरन् राधाभिधामुच्चरन्।**
**राधाया अनुरूपमेव परमं धर्म्मं रसेनाचरन्।**

---

चेत्-यदि, कदाचित् कृपादृष्टिपातं रचयति 'तदा' मुक्ति च बहुशः प्राकृताप्राकृत श्रीः तुच्छीभवति॥१३७॥ मन्दाक्रान्तावृत्तम्॥

मधुर मधुरानन्द रसदे वृन्दारण्ये प्रियेश्वर्य्याः प्रियस्य श्रीगोविन्दस्य ईश्वरी, प्रियानामीश्वरीति वा तस्याः श्रीराधायाः, केलिभवन नवकुञ्जानि, केलयः यत्र एतादृशानि भवनरूपाणि नवकुञ्जानि, कदाहं मृगये अन्वेष्यामि, च श्रीराधायाः पदकमल माध्वीकलहरी परीवाहैः मम अधीरं चञ्चलं, चेतो मधुकरं मनोभृङ्गं, कदामदयिता, उन्मत्तं भविष्यति॥१३८॥ शिखरिणीवृत्तम्॥

अहं राधाकेलि निकुञ्ज वीथिषु चरन् श्रीराधायाः केलिकुञ्जपथिसु विरचन्, राधाभिधामुच्चरन्-राधानामोच्चारणं

---

स्वरूप हैं, वह श्रीराधा यदि कभी कृपादृष्टिपात करें तो बहुशः प्राकृताप्राकृत श्री एवं मुक्ति तुच्छ हो जाती है॥१३७॥

मधुरादपि मधुर आनन्द रसप्रद श्रीवृन्दावन में कब मैं प्रियेश्वरी श्रीराधा के केलिभवन समूह का अन्वेषण करूँगी ? एवं कब मैं उनके पदकमल माध्वीक लहरी परीवाह के द्वारा मेरा चंचलचित्त मधुकर उन्मादित होगा ?॥१३८॥ श्रीराधा नामोच्चारण करते-करते एवं श्रीराधा के केलिकुञ्ज पथ में विचरण करते-करते

**राधायाश्चरणाम्बुजं परिचरन्नानोपचारैर्मुदा,**
**कर्हि स्यां श्रुतिशेखरोपरिचरन्नाश्चर्य्यचर्य्यां चरन्।।१३९।।**
**यातायातशतेन सङ्गमितयोरन्योन्यवक्त्रोल्लस-**
**च्चन्द्रालोकन संप्रभूत बहुलानङ्गाम्बुधिक्षोभयोः।**
**अन्तः कुञ्ज कुटीरतल्पगतयोर्दिव्याद्भुतक्रीड़यो,**
**राधामाधवयोः कदा नु शृणुयां मञ्जीरकाञ्चीध्वनिम्।।१४०।।**

---

कुर्वन्, राधाया अनुरूपमेव परमं धर्म रसेन आचरन्-श्रीराधायाः अनुकूलमेव परमं धर्म रसेन दास्य-सख्य-वात्सल्य-मधुरादि रसभेदेन सह वा आचरन्, राधायाः चरणाम्बुजं नानोपचारै मुदा परिचरन् श्रीराधायाः चरणकमलं विविधोपचारैः मुदा हर्षेण सेवयन्, श्रुतिशेखरोपरिचरन् आश्चर्य्यचर्य्यांचरन् कर्हि स्याम्॥१३९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यातायातशतेन सङ्गमितयोः अत्र 'शत' शब्दः बहुत्ववाचकः, बहुबारं परस्परं मिलनार्थं यातायातेन सम्मिलितयोः, अन्योन्य वक्त्रोल्लसत् चन्द्रालोकन सम्प्रभूत बहुलानङ्गाम्बुधि-क्षोभयोः परस्परं वदनयोः य उल्लासः स एव चन्द्रः तस्यावलोकनेन सम्प्रभूतः सञ्जातः बहुलः कन्दर्पसमुद्रस्य उच्छ्वासः ययोः, अन्तः कुञ्जकुटीर तल्प गतयोः कुञ्जाभ्यन्तरे यत् कुटीरं तत्र यत्तल्पं शय्या तत् प्राप्तयोः, दीव्याद्भुतक्रीड़योः, दिव्या अप्राकृता अद्भुता क्रीड़ा ययोः तयोः, राधामाधवयोः मञ्जीर काञ्चीध्वनिं श्रीराधायाः

---

रस के साथ श्रीराधा के अनुरूप परमधर्म का आचरण करते-करते एवं विविध उपचार के द्वारा आनन्द से श्रीराधा के श्रीचरणाम्बुजद्वय की सेवा करते-करते कब मैं श्रुतिशेखर के उपरिचर आश्चर्य चर्या का आचरण करती रहूँगी॥१३९॥ अनेक बार गमनागमन के बाद सम्मिलित, परस्पर के श्रीमुख दर्शन से संजात बहुल अनंग सिन्धु का उच्छ्वासयुक्त, कुंजकुटीराभ्यन्तर में केलितल्पगत एवं दिव्याद्भुत क्रीड़ारत श्रीराधामाधव की मंजीर कांचीध्वनि का श्रवण मैं कब करूँगी ? ॥१४०॥

**अहो भुवन मोहनं मधुर माधवी मण्डपे,**
**मधूत्सवसमुत्सुकं किमपिनीलपीतच्छवि।**
**विदग्धमिथुनं मिथोदृढ़तरानुरागोल्लस–**
**न्मदं मदयते कदा चिरतरं मदीयं मनः॥१४१॥**
**राधानाम सुधारसं रसयितुं जिह्वास्तु मे विह्वला,**
**पादौ तत् पदकाङ्क्तिासुचरता वृन्दाटवी वीथिषु।**
**तत् कर्म्मैव करः करोतु हृदयं तस्यां पदं ध्यायता–**
**त्तत्भावोत्सवतः परं भवतु मे तत् प्राणनाथेरतिः॥१४२॥**

---

मञ्जीरध्वनिं श्रीकृष्णस्य कटिप्रदेश भूषण काञ्चीध्वनि तयो–मिलित्वा ध्वनि, अनेन कन्दर्प केलिविहारं सूचितं, अहं कदानु–हि–शृणुयाम्॥१४०॥ शार्दूलविक्रीड़ितंवृत्तम्॥ अहो ! आश्चर्य्ये, मधुर माधवी–मण्डपे–मधुरा–माधवीलता मण्डपे, मधूत्सव समुत्सुकं वसन्त रासोत्सव समुत्सकं, मिथो दृढ़तरानुरागोल्लसन्मदं परस्परं दृढ़तरो योऽनुरागः, तेनोल्लसत् मदः हर्षं यस्य, किमपि अनिर्वचनीयं अनुपम, नीलपीतच्छवि नीला च पीताच्छवि कान्तिर्यस्य, भुवनमोहनं विदग्धमिथुनं रसिकयुगलं श्रीराधाश्यामो कदा मदीयं मनः चिरतरं सर्वदा, मदयते 'मृगयते' इतिचेत् पाठान्तरं तदा मनः प्रथमैक वचनम्। तत् पाठे द्वितीयैक वचनं ज्ञेयम्॥१४१॥ मे–मम, जिह्वा राधानाम–सुधारसं रसयितुं–आस्वादयितुं विह्वला अस्तु–भवतु, मे पादौ तत् पदकाङ्क्तिासु वृन्दारण्य वीथिषु चरतां, श्रीराधापदाङ्कलाञ्छितासु वृन्दारण्य वीथिषुचरतां, मे करः तत्

---

अहो ! मधुर माधवी मण्डप में मधूत्सव समुत्सुक, परस्पर दृढ़तर अनुरागोल्लासी मदविशिष्ट, अनुपम नीलपीतच्छवि भुवन–मोहन विदग्ध युगल, कब मेरे मन को प्रमोदित करेंगे ? ॥१४१॥ मेरी रसना राधानामरूप सुधारसास्वादन में विह्वला हो एवं मेरे पदयुगल श्रीराधा के पदांकलांच्छित श्रीवृन्दावन के पथ–पथ में

**मन्दीकृत्य मुकुन्द सुन्दर पदद्वन्द्वारविन्दामल,**
**प्रेमानन्दममन्दमिन्दुतिलकाद्युन्मादकन्दं परम्।**
**राधाकेलि कथा रसाम्बुधिचलद् वीचिभिरान्दोलितं,**
**वृन्दारण्य निकुञ्ज मन्दिर वरालिन्दे मनोनन्दतु।।१४३।।**
**राधा नामैव कार्यं ह्यनुदिनमिलितं साधनाधीशकोटि–**
**स्त्याज्यानीराज्य राधा पदकमल सुधां सत्पुमर्थाग्रकोटिः,**

---

कर्म्मैव श्रीराधायाः कर्मैव, करोति, मे हृदयं तस्याः–श्रीराधायाः, पदं ध्यायतात् ध्यानं कुरुतात्, तत् भावोत्सवतः तत् प्राणनाथे श्रीकृष्णे, मे–मम, परं रतिः–भवतु॥१४२॥ शार्दूलविक्रीड़ितंवृत्तम्॥ मे–मम, मनः इन्दुतिलकादिदुन्मादकन्दंचन्द्रचूड़शिवादिः, तेषां उन्मादकन्दं विश्वविस्मारक मूलभूतं, अमन्दं–सर्वोत्कृष्टं, परं अप्राकृतं, मुकुन्दसुन्दर पदारविन्दामल प्रेमानन्दं मुकुन्दस्य श्रीकृष्णस्य यत् सुन्दरं पदारविन्दद्वन्द्वं तस्य यो निर्मलं प्रेमानन्दं तं, मन्दीकृत्य तुच्छकृत्वा, वृन्दारण्य निकुञ्जमन्दिरे वरालिन्दे वृन्दावने यन्निकुञ्जमन्दिर तत् श्रेष्ठप्राङ्गणे, राधाकेलिकथा रसाम्बुधि चलद्वीचिभिः आन्दोलितं श्रीराधायाः केलिकथा एव रसाम्बुधिः तत्र चलत्वीचीभि स्तरङ्गैः आन्दोलितः सन् नन्दतु, आनन्दं प्राप्नोतु॥१४३॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यदि राधानामैवकार्यं राधानाम कीर्त्तन स्मरणादि कार्यं, हि निश्चयेन, अनुदिनं मिलितं प्राप्तं, साधनाधीशकोटिः व्याज्यो

---

विचरण करे तथा करद्वय श्रीराधा के कर्म में नियुक्त हो एवं हृदय उनके पदयुगल का ध्यान करे तथा उनके भावोत्सव से उनके प्राणनाथ श्रीकृष्ण में मेरी परमभक्ति हो॥१४२॥ अप्राकृत अमन्द एवं चन्द्रचूड़शिवादि का भी उन्मादकन्द श्रीकृष्ण के सुन्दर पदारविन्द युगलोत्थ निर्मल प्रेमानन्द के प्रति तुच्छ ज्ञान कर मेरा मन केवल श्रीराधा की केलिकथा रसाम्बुधि की चंचल तरंग से आन्दोलित होकर श्रीवृन्दावन के निकुञ्ज मन्दिरस्थ प्रांगण सुख का अनुभव करे॥१४३॥

**राधा पादाब्जलीलाभुवि जयति सदाऽमन्दमन्दारकोटिः,**
**श्रीराधाकिङ्करीणां लुठति चरणयोरद्भुतासिद्धिकोटिः।।१४४।।**
**मिथोभङ्गीकोटिप्रवहदनुरागामृतरसो,**
**तरङ्गद् भ्रूभङ्गक्षुभितवहिरभ्यन्तरमहो।**
**मदाघूर्णन्नेत्रं रचयति विचित्रं रतिकला,**
**विलासं तत् कुञ्जे जयति नवकैशोरमिथुनम्।।१४५।।**

---

भवति ज्ञानयोगादि श्रेष्ठसाधनः त्याज्यो भवति, तत् किं प्रमोजनं इत्यर्थः। बाधापदकमलसुधां नीराज्य नीराजनं कृत्वा, सत्पुमर्थाग्रकोटिः त्याज्यो भवति धर्मार्थकाममोक्षाणामग्रे यत् कोटिः तदपि त्याज्यो भवति, नतु तत् प्रयोजनमितिभावः। यतः राधापादाब्ज लीलाभुवि श्रीवृन्दावने, अमन्दमन्दारकोटिः, उत्कृष्टकल्पतरु कोटिः, सदाजयति, विद्यमाना तिष्ठति, च श्रीराधाकिङ्करीणां चरणयोरद्भुतासिद्धिकोटीः सदा लुठति॥१४४॥ स्रग्धरावृत्तम्॥

अहो ! आश्चर्य्ये, मिथोभङ्गी कोटि प्रवहदनुरागामृत रसोत्तरङ्ग भ्रूभङ्ग क्षुभित बहिरभ्यन्तरं परस्परं कोटि भङ्गीभिः प्रवाहमानः यः अनुरागामृतरसः तस्योद्गत तरङ्ग एव यो भ्रूभङ्ग तेन आलोड़ितं बहिरभ्यन्तरं ययो स्तत्, मदाघूर्णन्नेत्रं, मदेन काममदेन हर्षेण वा आघूर्णिते नेत्रे ययोस्तत्, नवकैशोरमिथुनम् श्रीराधाकृष्णद्वन्द्वं, तत् कुञ्जे तन्माधवीकुञ्जे, विचित्रं रतिकलाविलासं रचयति च जयति॥१४५॥ शिखरिणीवृत्तम्॥

---

अनुदिन राधानाम श्रवण कीर्त्तनादिरूप कार्यप्राप्त होने से कोटि श्रेष्ठ साधन भी परित्यज्य होते हैं, कारण श्रीराधापादाब्ज लीलाभूमि श्रीवृन्दावन में अमन्द कोटि कल्पतरु सर्वदा विद्यमान हैं एवं श्रीराधा किङ्करीगणों के चरणों में अद्भुत सिद्धि कोटि सदा विलुण्ठित है॥१४४॥ अहो ! परस्पर भंगी कोटि प्रवाहमान् अनुरागामृत रस से उद्गत तरंगरूप भ्रूभंग के द्वारा जिनके

**काचिद् वृन्दावन नवलतामन्दिरे नन्दसूनो,**
**र्दृष्यद् दोष्कन्दल दृढ़परीरम्भ निस्पन्दगात्री।**
**दिव्यानन्ताद्भुतरसकलाः कल्पयन्त्याविरास्ते,**
**सान्द्रानन्दामृत रसघन प्रेममूर्त्तिः किशोरी॥१४६॥**
**न जानीते लोकं नच निगमजातं कुलपरम्परां,**
**वा नो जानात्यहह न सताञ्चापि चरितम्।**

---

काचिद् नन्दसूनोदृष्यद्दोष्कन्दलदृढ़परीरम्भनिष्पन्दगात्री कृष्णस्य दर्पयुक्ताभ्यां दोर्भ्यां बाहुभ्यां कन्दलाभ्यां यो दृढ़परीरम्भं गाढ़ालिङ्गनं तेन निष्पन्दानि अङ्गानि यस्याः सा, सान्द्रानन्दामृत रसधन प्रेममूर्त्तः, सान्द्रः निविड़ो यः आनन्दः स एवामृतरसस्य मेघस्वरूपः तदेव यः प्रेमा स एव मूर्त्तिर्यस्याः सा, किशोरी श्रीराधे, वृन्दावन नवलता मन्दिरे दिव्यानन्ताद्भुत रसकलाः कल्पयन्ती, दिव्याः अप्राकृताश्च अनन्ताश्च अद्भुताश्च याः रसकलाः ताः रचयन्ती, आविरास्तें आविर्भूता आस्ते॥१४६॥ मन्दाक्रान्तावृत्तम्॥

यः रहसि ब्रजमणौ राधायां भावं च रसं किल निश्चयेन, आभजति यद्वा यः रहसि अत्र निभृत निकुञ्जमन्दिरे ब्रजमणौ श्रीकृष्णे यद्भावं च राधायां यद्रसं तत्तत् निश्चयेन भजति, अहह अत्याश्चर्य्ये, तेन लोकं स्वर्गादिलोकं, नजानीते च सतां साधूनां,

---

वाह्याभ्यन्तर आलोड़ित हैं एवं नेत्रयुगल मदघूर्णित हैं, उन नवकैशोर-मिथुन, कुंज के मध्य में विचित्र रतिकला विलास की रचना कर जययुक्त हो रहे हैं॥१४५॥ नन्दनन्दन के दर्पयुक्त बाहुद्वन्द्व द्वारा दृढ़परीरम्भन से निष्पन्दगात्री एवं सान्द्रानन्दामृत रसधन प्रेममूर्त्ति किशोरीमणि वृन्दावन के नवलता मन्दिर में दिव्य अनन्ताद्भुत रसकला को विस्तार कर विराजित हैं॥१४६॥ जो जन, इस रहःप्रदेश में ब्रजमणि श्रीराधा का भाव एवं रस का भजन निश्चयरूप से करते हैं, अहो ! वह संसारधर्म तथा वेदोक्त काम्यकर्म की अपेक्षा नहीं रखते हैं, यहाँ तक कि वह कुलपरम्परा

**रसं राधायामाभजति किलभावं ब्रजमणौ,**
**रहस्ये तद्यस्य स्थितिरपि न साधारणगतिः॥१४७॥**
**ब्रह्मानन्दैकवादाः कतिचन भगवद्वन्दनानन्दमत्ताः,**
**केचिद् गोविन्दसख्याद्यनुपम परमानन्दमन्येस्वदन्ते।**
**श्रीराधा किङ्करीणां त्वखिल सुखचमत्कारसारैकसीमा,**
**तत् पादाम्भोज राजन्नखमणिविलसज्ज्योतिरेकच्छटापि॥१४८॥**
**न देवैर्ब्रह्माद्यैर्नखलु हरिभक्तैर्नसुहृदा,**
**दिभिर्यद्वै राधा मधुपति रहस्यं सुविदितम्।**

---

चरितमपि न जानाति, एतद् यस्यस्थितिः तस्यापि साधारणगति र्न भवति॥१४७॥ शिखरिणी॥ कतिचन ब्रह्मानन्दैक वादाः सन्ति, केचित् भगवद्वन्दनानन्दमत्ताः भगवद्वन्दने यदानन्दं तेन मत्ताः विवशाः ये ते, सन्ति, अन्ये गोविन्द सख्याद्यनुपमपरमानन्दं स्वदन्ते–स्वाद्यन्तीत्यर्थः। श्रीराधाकिङ्करीणां तु तत् तस्याः श्रीराधायाः, पादाम्भोज राजन् नखमणिविलसज्ज्योतिरेकच्छटापि अखिलसुखचमत्कार सारैक सीमा अस्ति, तेषां त्रयाणामिदमति–दुर्ल्लभमित्यर्थः॥१४८॥ स्रग्धरा॥ यद्वै निश्चयेन,राधामधुपति रहस्यं ब्रह्माद्यैः देवैः न सुविदितं खलु हरिभक्तैः प्रह्लादाम्बरीषादिभिः, च सुहृदादिभिः नन्दादिभिः, न सुविहितं, तयोः राधा–माधवयोः दासीभूत्वा तदुपचित केलीः तत्र प्राप्ताः केलीः, असमये

---

एवं साधु–सम्प्रदाय के बन्धन से भी मुक्त रहते हैं, इस अवस्था में जिसकी स्थिति है उसकी कभी भी साधारण गति नहीं होती है॥१४७॥ कतिपय व्यक्ति ब्रह्मानन्दवादी, किसी को भगवद् वन्दन से आनन्द होता है, कोई तो श्रीगोविन्द सख्यादि अनुपम परमानन्द का आस्वादन करता है, किन्तु श्रीराधा किङ्करीगण श्रीराधा के पादपद्मराजित नखमणि ज्योति की एकमात्र च्छटा से ही अखिल

**तयोर्दासीभूत्वा तदुपचित केलीरसमये,**
**दुरन्ता प्रत्याशा हरि हरि दृशो र्गोचरयितुम्॥१४९॥**
**त्वयि श्यामे नित्यप्रणयिनि विदग्धे रसनिधौ,**
**प्रिये भूयोभूयः सुदृढ़मतिरागो भवतु मे।**
**इति प्रेष्ठेनोक्ता रमण मम तववचो,**
**वदन्तीति स्मेरा मम मनसि राधा विलसतु॥१५०॥**
**सदानन्दं वृन्दावननवलतामन्दिर वरे-**
**ष्वमन्दैः कन्दर्पोन्मदरतिकलाकौतुकरसम्।**

---

दृशोर्गोचरयितुं हरि हरि दुःखेनापि, मम दुरन्ताः प्रत्याशाः भवन्ति॥१४९॥ शिखरिणीवृत्तम्॥

हे श्यामे ! हे नित्य प्रणयिनि ! हे विदग्धे ! हे प्रिये ! रसनिधौ त्वयि मे-मम, अतिरागः भूयोभूयः सुदृढ़ भवतु, इति प्रेष्ठेनोक्ता श्रीकृष्णेन कथिता च, हे रमण ! मम चित्ते तववचः इति वदन्ती स्मेरा मन्दहास्ययुक्ता, राधा मम मनसि विलसतु॥१५०॥ शिखरिणीवृत्तम्॥

तत् वृन्दावन नवलतामन्दिर वरेषु कन्दर्पोन्मद रतिकला-कौतुकरसम् सदानन्दं किशोरं ज्योतियुगलं अमन्दैः शीतैः शैत्यैः, स्वपदमकरन्दैः मम अतिघोरं ज्वलज्ज्वालं जलन्ती ज्वाला

---

सुख चमत्कार की अवधि को प्राप्त करती हैं॥१४८॥ जिन श्रीराधामाधव का रहस्य ब्रह्मादि देवगण, हरिभक्तगण, सुहृद्वर्ग भी निश्चितरूप से विदित नहीं कर पाते हैं। हरि हरि ! उन श्रीराधामाधव की दासी होकर तदुपथित लीला दर्शन के लिए मेरी दुरन्त प्रत्याशा हो रही है॥१४९॥ हे श्यामे ! हे नित्य प्रणयिनी ! हे विदग्धे ! हे प्रिये ! तुम रसनिधि हो, तुम्हारे प्रति मेरा गाढ़ अनुराग पुनः-पुनः सुदृढ़ हो, श्रीकृष्ण के इस प्रकार कहने से श्रीराधा मृदुहास्य से बोलीं, हे रमण ! मेरे मन में भी वही बात है, वह श्रीराधा मेरे हृदय में सदा स्फुरित हों॥१५०॥

**किशोरं तज्ज्योति युगलमतिचोरं सम भवं,**
**ज्वलज्ज्वालं शीतैः स्वपदमकरन्दैः शमयतु ।।१५१ ।।**
**उन्मीलन्नवमल्लिदामविलसद् धर्म्मिल्लभारे,**
**बृहच्छ्रोणी मण्डलमेखला कलरवे शिञ्जत् सुमञ्जीरिणि।**
**केयूराङ्गद कङ्कणावलिलसद् दोर्वल्लिदीप्तिच्छटे,**
**हेमाम्भोरुह कुट्नलस्तनि कदा राधे दृशा पीयसे।।१५२।।**
**अमर्यादोन्मीलत् सुरतरसपीयूषजलधे,**
**स्तरङ्गैरुत्तुङ्गैरिव किमपि दोलायिततनुः।**

---

वह्निशिखा यस्मिन् तत्, भव संसारं शमयतु शीतली करोतु॥१५१॥ शिखरिणीवृत्तम्॥ हे उन्मीलन्नवमल्लिदाम विलसद्धम्मिल्लभारे ! प्रफुल्ला या नवमल्लीतन्मालाभिः शोभमाना कवरी यस्याः हे तथाविधे ! हे बृहच्छ्रोणीमण्डल मेखला कलरवे ! बृहन्नितम्बदेशे या मेखला, तस्याः कोमलरवः यस्याः हे तथाविधे ! हे शिञ्जत् सुमञ्जीरिणि ! शब्दायमाने सुमञ्जीरे यस्याः सा, तत् सम्बोधनम् हे केयूराङ्गद कङ्कणावलिलसद्दोर्वल्लिदीप्तिच्छटे ! केयूराङ्गद कङ्कणावलिलसत् यत् बाहुलता तद्दीप्तिच्छटा यस्याः हे तथाविधे! हे हेमाम्भोरुह कुट्नलस्तनि ! स्वर्णकमलकलिकेव स्तनौ यस्याः सा तत् सम्बोधनम् । हे राधे ! त्वं दृशा कदा पीयसे। शार्दूलविक्रीड़ितंवृत्तम्॥

---

श्रीवृन्दावन के नवलता मन्दिराभ्यन्तर में कन्दर्पोन्मद रतिकला कौतुकरस, सदानन्द, किशोराकृति वह ज्योति युगल, अमन्द शीतल स्वपद मकरन्द के द्वारा मेरी अति घोर ज्वलन्त भवज्वाला को शान्त करें॥१५१॥ हे प्रफुल्ल नवमल्लिका माला शोभित कवरीभारे ! हे बृहन्नितम्बमण्डले मेखला कलरवे ! हे शब्दायमान् नूपुरधारिणी ! हे केयूरांगद कंकणावलि विलसित बाहुवल्ली दीप्तिच्छटे ! हे कनककमल कलिकास्तनि ! हे श्रीराधे ! कब मेरी दर्शन तृष्णा को शान्त करोगी ? ॥१५२॥

**स्फुरन्ती प्रेयोऽङ्के स्फुटकनकपङ्केरुहमुखी,**
**सखीनां नो राधे नयनसुखमाधास्यसि कदा।।१५३।।**
**क्षरन्तीव प्रत्यक्षरमनुपम प्रेमजलधिं,**
**सुधाधारा वृष्टीरिव विदधती श्रोत्रपुटयोः।**
**रसार्द्रासन्मृद्वी परम सुखदा शीतलतरा,**
**भवित्री किं राधे तव सह मया कापि सुकथा।।१५४।।**

---

हे राधे ! त्वं अमर्य्यादोन्मीलत् सुरतरस पीयूषजलधेः उत्तुङ्गैरिव सुधाङ्गैः किमपि दोलायित तनुः मर्य्यादां गौरवं सीमां वा अतिक्रम्य उन्मीलत् यत् सुरतरसः शृङ्गाररसः स एव सुधासमुद्रस्तस्य उत्तुङ्गैरिव सुधाङ्गै किमपि अनिर्वचनीयः आन्दोलिता तनुर्यस्याः सा, स्फुट कनकपङ्केरुहमुखी विकसित स्वर्णकमलमुखी, च प्रेयोङ्के स्फुरन्ती प्रियतमस्य क्रोड़े विराजन्ती या सा, त्वं सखीनां नः अस्माकम्, नयनसुखं कदा आधास्यसि दर्शनं कदा दास्यसीति भावः॥१५३॥ शिखरिणीवृत्तम्॥ हे राधे ! मयासह तव प्रत्यक्षरमनुपम प्रेमजलधिं क्षरन्तीव अक्षरं अक्षरं प्रति अनुपम प्रेमजलधिं क्षरन्ती निर्झरवत्, श्रोत्रपुटयोः सुधाधारावृष्टिरिव विदधती, श्रवणपुटयोः अमृतधारा वृष्टिरिव सम्पादयन्ती, रसार्द्रा रसेन श्रीकृष्णेन आर्द्रा, नान्यः प्रसङ्गी यस्यामितिभावः, रस प्रचुरा वा, सन्मृद्वी सुकोमला, परमसुखदा च शीतलतरा यां श्रुत्वा कदापि न तृप्तो भवतीत्यर्थः, कापि अनिर्वचनीया, सुकथा किं भवित्री ? ॥१५४॥ शिखरिणीवृत्तम्॥

---

हे श्रीराधे ! मर्य्यादा को अतिक्रम कर जो लीलामृत समुद्र उद्भुत हुआ है, उसके उत्तुंग सुधांग के द्वारा आपका तनु अनिर्वचनीय रूप में आन्दोलित हो रहा है, आप प्रियतम के अंग से स्फूर्त्ति प्राप्त हो रही है एवं आप प्रफुल्ल कनककमलमुखी हो आप कब हम सभी सखियों को नयनानन्द प्रदान करोगी॥१५३॥

**अनुल्लिख्यानन्तानपि सदपराराधान्मधुपति-**
**र्म्महा प्रेमाविष्टस्तव परम देयं विमृशति।**
**तवैकं श्रीराधे गृणत इह नामामृतरसं,**
**महिम्नः कः सीमां स्पृशतु तव दास्यैकमनसाम्।।१५५।।**
**लुलितनवलवङ्गोदार कर्पूरपूरं,**
**प्रियतममुखचन्द्रोद्गीर्णताम्बुलखण्डम्।**
**घनपुलककपोला स्वादयन्तीमदास्ये-**
**ऽर्पयतु किमपि दासीवत्सला कर्हि राधा।।१५६।।**

---

हे राधे ! यः मधुपतिर्महाप्रेमाविष्टः सन् श्रीकृष्णस्य प्रेमाविष्टः सन्, तव इह एकं नामामृतरसंगृणतः राधेति एकं नामामृतं रसं गृह्नाति, स अनन्तानपि सदपराधान् अनुल्लिख्य न गणयित्वा, तव परमदेयं दास्यमित्यर्थः, विमृशति चिन्तयति, तस्मात् तव दास्यैक-मनसाम् महिम्नः सीमां कः स्पृशति ? ॥१५५॥ शिखरिणीवृत्तम्॥

धनपुलक कपोला किमपि दासीवत्सला राधा लुलित नवलवङ्गोदार कर्पूर पूरं लुलितं रम्यं मर्दितं वा नव लवङ्गं च उदारं प्रचुरं कर्पूरं तस्य पूरो, यस्मिन् तत् प्रियतम मुखचन्द्रोद्गीर्ण ताम्बुल खण्डम् प्रियतमस्य श्रीकृष्णस्य मुखचन्द्रनिर्गलितं ताम्बुल-

---

हे श्रीराधे ! मेरे साथ आपके प्रति अक्षर में अनुपम प्रेमजलधि निर्झरिणी, श्रवणपुट में सुधाधारा वर्षणकारिणी रसार्द्रा सन्मृद्वी परमसुखदा, शीतलतरा व अनिर्वचनीया सुकथा क्या होगी ? ॥१५४॥ हे श्रीराधे ! अतिशय श्रीकृष्ण प्रेमाविष्ट होकर जो व्यक्ति एकबार श्रीराधानाम सुधारस का आस्वादन करता है, वह अनन्त सद्अपराध को न मानकर केवल आपके दास्य की चिन्ता करता है, अतएव आपके दास्यैचित व्यक्तियों की महिमा की सीमा का स्पर्श कौन कर सकता है ? ॥१५५॥ घनपुलक कपोला अनिर्वचनीय दासीवत्सला श्रीराधा नवलवंग व प्रचुर कर्पूर समन्वित

**सौन्दर्य्यामृतराशिरद्भुतमहालावण्यलीलाकला,**
**कालिन्दीवरवीचिडम्बरपरिस्फुर्ज्जत्कटाक्षच्छविः।**
**सा कापि स्मरकेलिकोमलकलावैचित्र्यकोटिस्फुरत्,**
**प्रेमानन्दघनाकृति र्दिशतु मे दास्यं किशोरीमणिः॥१५७॥**
**दुकूलमतिकोमलं कलयदेव कौसुम्भकं,**
**निबद्धनवमल्लिकाललितमाल्यधम्मिल्लकम्।**

---

खण्डं चर्वित ताम्बुलमित्यर्थः, स्वादयन्तीसतीमदास्ये मन्मुखे कर्हि अर्पयतु ?॥ १५६॥ (मालतीवृत्तम् भवतिनजावथ मालती जरौ॥

या सौन्दर्य्यामृतराशिः सौन्दर्य्यमेवामृतंतस्यराशिः, अद्भुत महालावण्य लीलाकला अद्भुतः यः महालावण्यः तस्य या लीला सा कलारूपा षोडशांशरूपा यस्याः सा, कालिन्दीवरवीचि डम्बर परिस्फुर्जत् कटाक्षच्छविः यमुनायाः वरवीचिनां डम्बरमाटोपः तस्मादपि अति चमत्कृत कटाक्षच्छवि र्यस्याः सा स्मर केलिकोमल कला तत् वैचित्र्य कोटिभिः स्फुरन् प्रेमानन्द धनाकृतिः कन्दर्पक्रीयासु या कोमलकला तत् वैचित्र्य कोटिभिः स्फुरन् प्रेमानन्द घनाकृतिः ह्लादिनी शक्त्याः सारभूता मूर्त्तिर्यस्याः। सा कापि किशोरीमणिः मे दास्य दिशतु॥१५७॥ शार्दूलविक्रीड़ितंवृत्तम्॥ यत् अति कोमलं कौसुम्भकमेव दुकूलं कलयत् अतिमृदु कौसुम्भारुणमेव दुकूलं क्षौम-

---

प्रियतम श्रीकृष्ण के श्रीमुखचन्द्र से निर्गलित ताम्बुल खण्ड का आस्वादन करते-करते कब मेरे वदन में उसका अर्पण करेंगी॥१५६॥

जो सौन्दर्यामृत की राशिस्वरूपा, अद्भुत महालावण्य लीलाकला, श्रीयमुना तरंग की आटोप की अपेक्षा से भी जिनकी चमत्कार कटाक्षच्छवि एवं जो कन्दर्पकेलि कोटि कोमलकला वैचित्र्य विस्फुरित प्रेमानन्द घनाकृति हैं, वह अनिर्वचनीय किशोरीमणि मुझे दास्यता प्रदान करें॥१५७॥

जिनके परिधान में अति कोमल कौसुम्भारुण दुकूल है एवं धम्मिल्ल मधुमल्लिका के ललित माल्य से निबद्ध है, जिनके

**बृहत् कटितटस्फुरन्मुखर मेखलालङ्कृतं,**
**कदानुकलयामि तत् कनकचम्पकाभं महः॥१५८॥**
**कदा रासे प्रेमोन्मदरसविलासेऽद्भुतमये–**
**दृशोर्म्मध्ये भ्राजन्मधुपति सखीवृन्दवलये।**
**मुदान्तः कान्तेन स्वरचितमहालास्यकलया,**
**निषेवे नृत्यन्तीं व्यजनवरताम्बूलशकलैः॥१५९॥**

---

वस्त्रं कलयत् स्वीकुर्वत्, निबद्ध मधुमल्लिका ललितमाल्य धम्मिलकं मधुमल्लिकानां यत् सुन्दरं माल्यं तेन निबद्धं धम्मिलकं यस्य तत्, बृहत्कटितटस्फुरन्मुखर मेखलालङ्कृतं विशाल नितम्बावधि देदीप्यमानामुखरा शब्दायमाना या मेखला तया अलङ्कृतं यत् कनकचम्पकाभं महः कदानुकलयामि ? ॥१५८॥ पृथ्वीवृत्तम्॥

प्रेमोन्मद रसविलासे प्रेम्ना उन्मदः यः रसः श्रीकृष्ण, तस्यविलसनं यस्मिन्, अद्भुतमये अद्भुतस्वरूपे दिशोर्मध्ये भ्राजन् मधुपति सखीवृन्द वलये यद्दिशोर्मध्ये देदीप्यमानोमधुपतिः श्रीकृष्णः तत् सखीवृन्द वलये सखीनां वर्त्तुलाकारो यस्मिन् तस्मिन्, रासे स्वरचित महालास्य कलया स्वयमेव रचिता या महानृत्यस्य कला तया, मुदान्तः कान्तेन सह मुदा हर्षः यस्य स एव कान्तः प्रियतमः तेनसह श्रीकृष्णेन सहेत्यर्थः। नृत्यन्तीं नृत्यं कुर्वतीम्, तां श्रीराधां व्यजन नवताम्बुलशकलैः व्यजनेन नवताम्बुल खण्डैश्च अह कदा निषेवे ? ॥१५९॥ शिखरिणीवृत्तम्॥

---

विपुल कटितट में मुखर मेखला सुशोभित है, उन कनकचम्पकाभ 'महः' अर्थात् ज्योतिरूप का दर्शन मैं कब करूँगी ? ॥१५८॥ प्रेमोन्मद रस विलास, अद्भुतमय चारों ओर शोभित मधुपति सखीवृन्द वलययुक्त रासमण्डल में जो प्रफुल्ल कान्त के साथ स्वरचित महालास्य कला का विस्तार कर नृत्य कर रही हैं, उन श्रीराधा की सेवा मैं कब व्यजन नवताम्बूलखण्ड के द्वारा करूँगी ? ॥१५९॥

**प्रसृमरपटवासे प्रेमसीमाविकासे,**
**मधुर मधुर हासे दिव्यभूषाविलासे।**
**पुलकितदयितांसे संवलद् बाहुपाशे,**
**तदति ललित रासे कर्हि राधामुपासे।।१६०।।**
**यदि कनक सरोजं कोटि चन्द्रांशुपूर्णं,**
**नव नव मकरन्दस्यन्दि सौन्दर्यधाम।**
**भवति लसितचञ्चत्खञ्जनद्वन्द्वमास्यं,**
**तदपि मधुर हास्यं दत्तदास्यं न तस्याः।।१६१।।**

---

प्रसृमर पटवासे विस्तारं प्राप्तः पटवासः यस्मिन्, प्रेमसीमा विकासे, प्रेम्नः अवधि विकासो यस्मिन्, मधुर मधुर हासे मधुरादपि मधुरं हासो यस्मिन्, दिव्य भूषाविलासे दिव्यानि चमत्काराणि भूषणानि तेषां विलासो यस्मिन्, पुलकित दयितांसे सम्बलद् बाहुपार्श्वे पुलकित दयितस्य दयितायाः वा अंशेस्कन्धे सम्बलत् ब्राहुपाशो बाहुभ्यामन्योन्यं कण्ठग्रहणं यस्मिन्, तदति ललितरासे अहं कर्हि राधां उपासे उपासनां करिष्यामीत्यर्थः।।१६०।। मालती।।

तस्याः श्रीराधायाः आस्यं, वदनं यदि कनकसरोजं स्वर्णकमलवत् प्रफुल्लं, कोटिचन्द्रांशुपूर्ण नवनवमकरन्दस्यन्दि नित्याभिनव मकरन्दं स्रवति यस्मात् तत्, सौन्दर्य्यधाम निखिल सौन्दर्य्यस्यालय स्वरूपं, लसितं चञ्चत् खञ्जन द्वन्द्वं शोभितं चञ्चलीभूतं खञ्जनद्वन्द्वं नेत्ररूपं यस्मिन् तत्, मधुर हास्यं मधुर हास्यं यस्मिन् तत्, भवति, तदपि अपीति सम्भावनायाम् दत्तं

---

जिसमें विस्तार प्राप्त पटवास, प्रेमसीमा का विकास, मधु-मधुर हास, दिव्यभूषा का विलास एवं पुलकितदयितां से सुविन्यस्त बाहुपाश है, उस अति ललित रास में कब मैं श्रीराधा की उपासना करूँगी ? ।।१६०।। श्रीराधा का वदन यदि कनक कमलवत् प्रफुल्ल, कोटि चन्द्रांशुपूर्ण, नव-नव मकरन्दस्यन्दी, सौन्दर्य

**सुधाकरसुधाकरं प्रतिपदस्फुरन्माधुरी,**
**धुरीण नवचन्द्रिका जलधितुन्दिलं राधिके।**
**अतृप्तहरिलोचनद्वयचकोरपेयं कदा,**
**रसाम्बुधि समुन्नतं वदनचन्द्रमीक्षे तव॥१६२॥**
**अङ्ग प्रत्यङ्ग रिङ्गन्मधुरतर महाकीर्त्ति पीयूष सिन्धो,**
**रिन्दोः कोटि र्विनिन्दद् वदनमतिमदालोल नेत्रं दधत्याः।**

---

दास्यं येन तत्, न स्यात् ? ॥१६१॥ मालतीवृत्तम्॥ हे राधिके ! सुधाकर सुधाकरं सुधाकरस्य चन्द्रस्य सुधायाः आकरं उत्पत्तिस्थानं यत्, प्रतिपदस्फुरन्माधुरीधुरीण नवचन्द्रिकाजलधितुन्दिलं प्रतिपदं देदीप्यमाना या माधुरी तासां श्रेष्ठा या नवचन्द्रिका सैव समुद्रस्तस्य बर्द्धकं, अतृप्त हरिलोचनद्वयचकोरपेयम् अतृप्तस्य श्रीकृष्णस्य नयनमेव चकोरयोः पानयोग्यं, रसाम्बुधिसमुन्नतं रससमुद्रस्य उच्छ्वास कारणम्, तव वदनचन्द्रं कदा अहं ईक्षे पश्यामि॥१६२॥ पृथ्वीवृत्तम्॥

अङ्गप्रत्यङ्गरिङ्गन् मधुरतरकीर्त्ति पीयूषसिन्धोः अङ्गप्रत्यङ्गेभ्यो चलन्त्यः मधुरतरा महाकीर्त्ति पीयूष सिन्धवो यस्याः, इन्दोः कोटिंर्विनिन्दद्वदनमतिमदालोलनेत्रं दधत्याः चन्द्रकोटिर्विनिन्दद् वदनं च अति हर्षेण लोलं विह्वलं नेत्रं दधत्याः

---

निलय, चंचल नयन खञ्जन द्वन्द्वशोभित एवं मधुर हास्ययुक्त हैं, तब वह दत्तदास्य क्यों नहीं होगा ? ॥१६१॥ हे श्रीराधिके ! सुधाकर के भी सुधाकर, प्रतिपद में देदीप्यमाना, माधुरीसाररूप नवचन्द्रिका समुद्र के बर्द्धक, अतृप्त हरिलोचनद्वयरूप चकोर का पेय एवं रसाम्बुधि का क्षोभकारक आपके वदनचन्द्र का दर्शन मैं कब करूँगी ? ॥१६२॥

जो अंग–प्रत्यंग संचालन हेतु मधुरतर महाकीर्त्ति पीयूष के सिन्धु हैं, जिनका इन्दुकोटि विनिन्दित वदन है, अति मदालोल नयन विशिष्टा हैं, जिनका तनु सौकुमार्य्याद्भुत ललित है, उन

**राधायाः सौकुमार्य्याद्भुत ललिततनोः केलि कल्लोलिनीना,**
**मानन्दस्यन्दिनीनां प्रणय रसमयान् किं विगाहे प्रवाहान्॥१६३॥**
**मत्कण्ठे किं नखरशिखया दैत्यराजोऽस्मि नाहं,**
**मैवं पीड़ां कुरुकुचतटे पूतना नाहमस्मि।**
**इत्थं कीरैरनुकृतवचः प्रेयसा सङ्गतायाः,**
**प्रातः श्रोष्ये तव सखि कदा केलिकुञ्जं मृजन्ती॥१६४॥**
**जाग्रत स्वप्न सुषुप्तिषु स्फुरतु मे राधा पदाब्जच्छटा,**
**वैकुण्ठे नरकेऽथवा मम गतिर्नान्यास्तु राधां विना।**

---

धारयत्याः, सौकुमार्य्याद्भुत ललित तनोः सौकुमार्य्यादाश्चर्यरूपा ललिता तनु र्यस्याः, तस्याः राधायाः आनन्दस्यन्दिनीनां केलिकल्लोलिनीनां केलिनदीनां, प्रणयरसमयान् प्रवाहान् अहं किं विगाहे अवगाहिष्ये॥१६३॥ स्रग्धरावृत्तम्॥

नखरशिखया नखाग्रेण, मत्कण्ठे किं नखाघातं किं प्रयोजनमित्यर्थः अहं दैत्यराजः तृणावर्त्तः, न अस्मि, कुचतटे पीड़ामेव मा कुरु, 'अहं पूतना न अस्मि' हे सखि ! इत्थं प्रेयसा सङ्गतायाः प्रियेण श्रीकृष्णेन सहमिलितायाः, तव कीरैरनुकृत वचः कीरैः शुकैः अनुकृतः रात्रौ यच्छृण्वन्ति तत् प्रतिवदन्ति तदेव अनुकृतानि वचनानि, कदा प्रातः अहं केलिकुञ्जं मृजन्ती श्रोष्ये श्रवणं करिष्ये ? ॥१६४॥ मन्दाक्रान्तावृत्तम्॥

---

श्रीराधा के आनन्द निःस्यन्दिनी केलिकल्लोलिनी के प्रणय प्रवाह में कब मैं अवगाहन करूँगी॥१६३॥ मेरे कण्ठ में नखराघात न करो, मैं दैत्यराज तृणावर्त्त नहीं हूँ, वक्षोज को पीड़ित न करो, मैं पूतना नहीं हूँ, हे सखि ! प्रिय के साथ वाक्यालाप का कथन प्रभात में शुक द्वारा होने से मैं कब केलिकुञ्ज संस्कार करते समय उसका श्रवण करूँगी॥१६४॥ मेरी जागृत, स्वप्न, सुषुप्ति अवस्था में श्रीराधापादाब्जच्छटा स्फुरित हो, वैकुण्ठ में अथवा नरक में श्रीराधा

**राधा केलिकथा सुधाम्बुधि महावीचिभिरान्दोलितं,**
**कालिन्दीतटकुञ्जमन्दिरवरालिन्दे मनोविन्दतु॥१६५॥**
**अलिन्दे कालिन्दीतटनवलतामन्दिरगते,**
**रतामर्दोद्धुत श्रमजलभरापूर्ण वपुषोः।**
**सुखस्पर्शेनामीलितनयनयोः शीतमतुलं,**
**कदा कुर्य्यां संवीजन महह राधा मुरभिदोः॥१६६॥**
**क्षणं मधुरगानतः क्षणममन्दहिन्दोलतः,**
**क्षणं कुसुम वायुतः सुरतकेलिशिल्पैः क्षणम्।**

---

राधापादाब्जच्छटा मे जाग्रत् स्वप्नसुषुप्तिषु स्फुरतु, वैकुण्ठे अथवा नरके राधां विना मम अन्यगतिर्न अस्तु। परन्तु राधाकेलिकथा-सुधाम्बुधि महावीचिभिरान्दोलितं राधाकेलिकथैव सुधासमुद्रस्तद्वी-चिभिस्तरङ्ग रान्दोलितं, मनः कालिन्दीतट कुञ्जमन्दिर वरालिन्दे यमुनातीरवर्त्ती कुञ्जमन्दिराङ्गणे, विदन्तु प्राप्नोतु॥१६५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहह ! अत्याश्चर्य्ये कालिन्दीतट नवलता मन्दिरगते अलिन्दे यमुनातीरवर्त्तिनवलतामन्दिराङ्गणे, रतामर्दोद्भूत श्रमजल भरापूर्ण वपुषोः कन्दर्पक्रीड़ाजनितं यत् श्रमजलं तस्यभरः प्रवाहेन पूर्णवपुषो र्य योः, सुखस्पर्शेनामीलित नयनयोः बहुसुखस्पर्शेन ईषन्मीलिते नयने राधामुरभिदोः राधाकृष्णयोः अतुल शीतसंवीजनं अहं कदा कुर्य्याम्॥१६६॥ शिखरिणीवृत्तम्॥

---

पदाब्ज को छोड़कर मेरी अन्य गति न हो, किन्तु श्रीराधाकेलिकथारूप सुधासमुद्र की तरंग से आन्दोलित मेरा मन श्रीयमुनातीरवर्त्ति कुञ्जमन्दिरांगण में विराजित हो॥१६५॥ अहो ! श्रीयमुनातीरवर्त्ति नवलता मन्दिरांगण में कन्दर्प क्रीड़ाजनित श्रमजल प्रवाह पूर्णतनु, सुखस्पर्श से आमीलित नयन श्रीराधाकृष्ण का अतुल शीतसंवीजन मैं कब करूँगी ? ॥१६६॥

**अहो मधुरसद्रस प्रणयकेलि वृन्दावने,**
**विदग्धवरनागरी रसिकशेखरौ खेलतः॥१६७॥**
**अद्य श्याम किशोरमौलि रहह प्राप्तोरजन्यामुखे,**
**नीत्वा त्वां करयोः प्रगृह्य सहसा नीपाटवीं प्राविशत्।**
**श्रोष्येतल्पमिलन्महारतिभरे प्राप्तेऽपि शीत्कारितं,**
**तद् वीचि सुखतर्जनं किमु हरेः स्वश्रोत्ररन्ध्राश्रितम्॥१६८॥**

---

अहो ! मधुर सद्रस प्रणयकेलि वृन्दावन मधुरसत् अप्राकृतश्च यद्रसः तस्य प्रणयकेलि यस्मिन्नेतादृशे वृन्दावने, विदग्धवर नागरी रसिकशेखरौ, विदग्धासु या वरा सैवनागरी श्रीराधा च श्रीरसिकशेखरश्च श्रीकृष्णश्च, क्षणं मधुर गानतः क्षणं अमन्द हिन्दोलितः क्षणं कुसुम वायुतः कुसुमस्पर्शी वायुः यः तस्मात्, क्षणं सुरत केलिशिल्पैः, कन्दर्पकेलिचातुर्य्यैः खेलतः क्रीड़तां॥१६७॥ पृथ्वीवृत्तम्॥

अहह ! अत्याश्चर्य्ये ! अद्यश्यामकिशोरमौलिः श्रीकृष्णः प्राप्तोरजन्यामुखे प्राप्त प्रदोषे, करयोः प्रगृह्य करयोः गृहीत्वा, त्वां श्रीराधां, नीत्वा सहसा नीपाटवीं कदम्बविपिनं प्रति, प्राविशत्। तत्र तल्पमिलन्महारति भरेप्राप्ते अपि तद्वीचि सुख तर्जनं सुखतरङ्गस्य तर्जन रूपं, हरेः श्रीकृष्णस्य, स्वश्रोत्ररंध्राश्रितं स्वश्रवणपदाश्रितं यत्, तत् सीत्कारितं किमु अहं श्रोष्ये ?॥१६८॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

अहो ! मधुर सद्रस का प्रणय केलिमय श्रीवृन्दावन में विदग्धवर नागरी श्रीराधा, रसिकशेखर श्रीकृष्ण, मधुर गान कर, अमन्द हिन्दोला में झूलकर, कुसुम मारुति का सेवन कर एवं कन्दर्पकेलि नैपुण्य का प्रकाश कर क्रीड़ा कर रहे हैं॥१६७॥ अहो ! अद्य रजनी मुख में (प्रदोष में) श्यामकिशोरमौलि श्रीकृष्ण, श्रीराधा के कर–युगल को धारणकर सहसा कदम्ब कानन में प्रविष्ट हो गये, वहाँ केलितल्प में मिलित महारतिभर प्राप्त होने से श्रीकृष्ण के श्रवण पदवीगत सुख तरंग तर्जनरूप सीत्कार का श्रवण क्या मैं कर सकूँगी ? ॥१६८॥

**श्रीमद्राधे त्वमथ मधुरं श्रीयशोदा कुमारे,**
**प्राप्ते कैशोरकमतिरसाद् वल्गसे साधुयोगम्।**
**इत्थं वाले महसि कथया नित्यलीला वयः श्री,**
**जातावेशा प्रकट सहजा किन्नुदृश्या किशोरी॥१६९॥**
**एकं काञ्चन चम्पकच्छविपरं नीलाम्बुदश्यामलं,**
**कन्दर्पोत्तरलं तथैकमपरं नैवानुकूलं वहिः।**
**किञ्चैकं बहुमानभङ्गिरसवच्चाटुनि कुर्व्वत् परं,**
**पश्य क्रीड़ति कुञ्ज सीम्नि तदहो द्वन्द्वं महामोहनम्॥१७०॥**

---

श्रीयशोदाकुमारे श्रीकृष्णे, कैशोरकं प्राप्तेसति हे श्रीमद्राधे! अथ त्वं मधुरं साधुयोगं अतिरसाद् वल्गसे। इत्थं कथया वाले महसि कोमल तेजसि, नित्यलीलावयः श्रीजातावेशा नित्यलीलावयसि श्रिया जात आवेशो यस्याः, प्रकट सहजा प्राकट्ये सहैव जाता, किशोरी श्रीराधाया, किं नु दृश्या भवति ?॥१६९॥ मन्दाक्रान्तावृत्तम्॥

अहो ! क्रीड़ानिकुञ्जसीम्नि केलिकुञ्जसीम्नि, एकं काञ्चनचम्पकच्छवि, परं–अपरं, नीलाम्बुजश्यामलं नीलमेघवत् श्यामसुन्दरं तथा एकं कन्दर्पोत्तरलं कन्दर्पेण अति चञ्चल, अपरं वहिः नैवानुकूलं, किञ्च एकं बहुमानभङ्गि अपरं रसवच्चाटुनि कुर्वत् सरस प्रार्थना वाक्यानि कुर्वत्, तत् महामोहनं द्वन्द्वं किं अहं वीक्षे ?॥१७०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

श्रीयशोदानन्दन श्रीकृष्ण कैशोरत्व प्राप्त होने से, हे श्रीमती राधे ! आपने भी रसाधिक्य के कारण उस मधुर साधुयोग को शीघ्र प्राप्त किया है, इस प्रकार कहने से, कोमल कान्ति श्रीकृष्ण में जिनका आवेश नित्यलीलावयः श्री के द्वारा हुआ है, वह प्रकट सहजा किशोरी क्या मेरे नयनगोचरीभूता होंगी ?॥१६९॥ अहो! केलिकुञ्ज सीमा में एकजन कांचनचम्पकद्युति, अपरजन, नीलाम्बुदश्यामल, एकजन द्वारा चंचलीकृत अपरजन, वाह्यतः

**विचित्ररति विक्रमं दधदनुक्रमादाकुलं,**
**महामदन वेगतो निभृतमञ्जुकुञ्जोदरे।**
**अहो विनिमयन्नवं किमपि नीलपीत पटं,**
**मिथो मिलितमद्भुतं जयति पीतनीलं महः।।१७१।।**
**करे कमलमद्भुतं भ्रमरतोर्मिथोऽंसार्पित,**
**स्फुरत् पुलक दोर्लतायुगलयोः स्मरोन्मत्तयोः।**
**सहासरसपेशलं मदकरीन्द्रभङ्गीशतै-**
**र्गतिं रसिकयोर्द्वयोः स्मरत चारुवृन्दावने।।१७२।।**

---

अहो ! निभृत मञ्जु कुञ्जोदरे आवृतं यन्मञ्जु सुन्दरं कुञ्जं तस्याभ्यन्तरे, महामदन वेगतः आकुलं अनुक्रमात् विचित्ररति विक्रमं दधत् अनुक्रमेण विचित्रा या रतौविक्रमाः तान् दधत्, किमपि, अनिर्वचनीयं नवं नीलं पीतञ्च पटं विनिमयत् मिथो परस्परं मिलितं अद्भुतं पीतपटं महः श्रीराधाकृष्णावित्यर्थः। जयति सर्वोत्कर्षेण वर्त्तते॥१७१॥ पृथ्वीवृत्तम्॥

चारु वृन्दावने करे कमलमद्भुतं भ्रमतयोः मिथः अंसार्पित स्फुरत् पुलकदोर्लतायुगलयोः, मिथः परस्परं स्कन्धयोरर्पिता देदीप्यमाना पुलकिता भुजलता द्वयोर्ययोः, स्मरोन्मत्तयोः कन्दर्प मदोन्मदोन्मत्तयोः, रसिकयोर्द्वयोः श्रीराधाकृष्णयोः, सहासरसपेशलं मदकरीन्द्रभङ्गीशतैः गतिं हासेनसहितः यद्रसः तेन पेशलं सुन्दरं

---

प्रतिकूल, एकजन बहुमानभंगी, अपरजन, सरस चाटुकारी, इस प्रकार महामोहन युगल का क्या मैं दर्शन कर सकूँगी ? ॥१७०॥ अहो ! निभृत मंजुकुंजाभ्यन्तरे महामदनवेशे आकुल अनुक्रमे विचित्र रतिविक्रमधारी अभिनव नीलपीत वसन विनिमयकारी एवं परस्पर सन्मिलित अद्भुत पीतनील महः श्रीराधाकृष्ण जययुक्त हो रहे हैं॥१७१॥ चारु श्रीवृन्दावन में हस्त द्वारा अद्भुत कमल भ्रमणकारी एवं परस्पर के स्कन्ध में पुलकित भुजलताद्वय अर्पणकारी,

**खेलन्मुग्धाक्षिमीनस्फुरदधरमणीविद्रुमश्रोणिभार,**
**द्वीपायामोत्तरङ्गस्मरकलभकटाटोपवक्षोरुहायाः।**
**गम्भीरावर्त्तनाभेर्बहुलहरिमहाप्रेमपीयूषसिन्धोः,**
**श्रीराधायाः पदाम्भोरुहपरिचरणे योग्यतामेव गेषे॥१७३॥**
**विच्छेदाभासमात्रादहह निमिषतो गात्रविस्रंसनादौ,**
**दिप्यत् कल्पाग्नि कोटिज्वलितमिव भवेद् वाह्यमभ्यन्तरं च,**

---

मदयुक्तो यः करीन्द्रः, तस्यभङ्गीशतैः तुल्यां गतिं गमनं, स्मरत।।१७२॥पृथ्वीवृत्तम्॥

खेलन्मुग्धाक्षिमीनस्फुरदधरमणिविद्रुमश्रोणिभार द्वीपाया मोत्तरङ्ग स्मरकलम कटाटोपवक्षोरुहायाः खेलतीमुग्धे नयने मीनवत्, देदीप्यमानाधरमणि विद्रुमः प्रवालवदरुणः श्रोण्योर्भारश्च द्वीपवद्विस्तारः तत्र उत्तरङ्ग, अत्यन्त साधारणः स्मरकलभकाम एव करिशावकः तस्य यः कटाटोपः, कुम्भद्वयस्याटोपः तद्वद्वक्षोरुहे यस्याः, गम्भीरावर्त्तनाभेः गम्भीराचासौ आवर्त्तयुक्तानाभि र्यस्याः, बहुल हरिमहाप्रेम पीयूषसिन्धोः, बहुल यः श्रीकृष्णस्य महांप्रेमा स एव अमृतं तस्य सिन्धुरूपायाः, श्रीराधायाः एव पादाम्भोरुह परिचरणे–श्रीचरणकमल सेवने, योग्यतां उपयुक्ततां अधिकारं वा, अहं गेषे अन्विष्यामि॥१७३॥ स्रग्धरावृत्तम्॥

---

कन्दर्पोन्मत्त रसिक युगल की सहास्य रसपेशल मदकरीन्द्र की शतभंगीतुल्य गति का स्मरण तुम सब करो॥१७२॥

जिनके मुग्ध नयनयुगल, मीनवत् चंचल, अधरपुट, मणिविद्रुम के समान उज्ज्वल, विपुल नितम्बरूप द्वीप में असाधारण कन्दर्प करभ के कुम्भद्वय के समान वक्षोज युगल, गम्भीरावर्त्त नाभिदेश हैं एवं जो बहुल श्रीकृष्णप्रेमामृत का महासिन्धु हैं, उन श्रीराधा के चरणकमल सम्बाहन करने का योग्यता का अन्वेषण मैं करती हूँ॥१७३॥

**गाढ़स्नेहानुवद्ध ग्रथितमिव वयोरद्भुत प्रेममूर्त्त्योः,**
**श्रीराधामाधवाख्यं परमिह मधुरं तद् द्वयं धामजाने ।।१७४।।**
**कदारत्युन्मुक्तं कचभरमहं संयमयिता,**
**कदा वा संधास्ये त्रुटितनवमुक्तावलिमपि।**
**कदा वा कस्तूर्यास्तिलकमपि भूयोरचयिता,**
**निकुञ्जान्तर्वृत्ते नवरतिरणे यौवत मणेः।।१७५।।**

---

अहह ! अत्याश्चर्य्ये, ययोः गात्र विस्रंसनादौ आवश्यक कृत्यादौ देहधर्मादौ वा, निमिषतः निमेषमात्रेण, विच्छेदा-भासमानात् वाह्याभ्यन्तरञ्च चञ्चत् कल्पाग्नि कोटि ज्वलितमिव भवेत् प्रकट कोटि ज्वालावत् भवेत्, तयोः अद्भुत प्रेममूर्त्त्योः गाढ़ स्नेहानुबन्ध ग्रथितमिव गाढ़प्रेमानुबन्धेन एकीभूतमिव, मधुरं परं इह श्रीराधामाधवाख्यं तद्द्वयंधाम अहं जाने॥१७४॥स्रग्धरावृत्तम्॥

निकुञ्जान्तः निकुञ्जाभ्यन्तरे यौवनमणेः यौवनं मणिरूपं सर्वदैकरूपं यस्याः तस्याः श्रीराधायाः, नवरतिरणेवृत्ते: नित्याभिनव कन्दर्पयुद्ध प्राप्तेसति, तस्याः रत्युन्मुक्तं कचभरं रत्याप्रेम क्रीड़या उन्मुक्तं यत् केशपाशं तत्, अहं कदा संयमयिता सन्धानं करिष्ये, कस्तूर्य्याः तिलकमपि भूयः कदा रचयिता पुनः पुनः रचनां करिष्येत्यर्थः॥१७५॥ शिखरिणीवृत्तम्॥

---

अहो ! जो देह धर्मादि में निमेषमात्र विच्छेदाभास को मानकर वाह्य अभ्यन्तर में ज्वलन्त कोटि प्रलयाग्नि की ज्वाला का अनुभव करते हैं, उन अद्‌भुत प्रेममूर्त्ति युगल का गाढ़ स्नेहानुबन्ध ग्रथितवत् मधुर श्रीराधामाधवाख्य परम धामद्वय को मैं अवगत हो रही हूँ॥१७४॥ निकुञ्जाभ्यन्तरे यौवनमणि श्रीराधा के उन्मुक्त केशापाश का बन्धन कब करूँगी। छिन्नमुक्त माला का ग्रन्थन कब करूँगी एवं कस्तूरीपंक के द्वारा पुनर्वार तिलक रचना कब करूँगी॥१७५॥

**किं ब्रूमोऽन्यत्र कुण्ठीकृतकजनपदे धाम्न्यपि श्रीवैकुण्ठे,**
**राधामाधुर्य्यवेत्ता मधुपतिरथ तन्माधुरीं वेत्ति राधा।**
**वृन्दारण्यस्थलीयं परमरससुधामाधुरीणां धुरीणा,**
**तद् द्वन्द्वं स्वादनीयं सकलमपि ददौ राधिकाकिङ्करीणाम्।।१७६।।**
**लसद्वदन पङ्कजा नवगभीर नाभिभ्रमा,**
**नितम्ब पुलिनोल्लसन्मुखर काञ्चिकादम्बिनी।**
**विशुद्ध रसवाहिणीरसिकसिन्धुसङ्गोन्मदा,**
**सदा सुरतरङ्गिणी जयति क्वापि वृन्दावने।।१७७।।**

---

श्रीवैकुण्ठे धाम्नि अपिकुण्ठीकृतक जनपदे-जनपदेदेशे, मधुपतिः श्रीकृष्णः, राधामाधुर्य्यवेत्ता अथ राधा तन्माधुरीं मधुपतेर्माधुर्य्यं, वेत्ति, अन्यत्र किं ब्रूमः ? इयं परमरससुधा माधुरीणां धुरीणा माधुर्य्याणां अग्रगण्यमूर्त्तिमती, वृन्दावनस्थलीयं श्रीराधिका किङ्करीभ्यः तद्द्वन्द्वं स्वादनीयं श्रीराधाकृष्णयोः स्वादनीयं यन्माधुर्य्यं सकलमपि ददौ॥१७६॥ स्रग्धरावृत्तम्॥

वृन्दावने लसद्वदनपङ्कजा शोभमानं वदनमेव कमलं यस्याः, नवगभीर नाभिभ्रमा, नवीनाचासौ गम्भीरा च एतादृशी नाभिरेव भ्रम आवर्त्तो यस्याम्, नितम्बपुलिनोल्लसन्मुखर काञ्चिकादम्बिनी नितम्ब पुलिनं तत्र उल्लसतीशोभमाना शब्दायमाना काञ्ची एव कादम्बिनी मेघमाला यस्याः सा, विशुद्ध रसवाहिनी विशुद्धं अप्राकृतं रसं बहति या सा, रसिकसिन्धुसङ्गोन्मदा रसिकः

---

अन्य बात तो क्या ? श्रीवैकुण्ठधाम को भी जो कि कुण्ठित किया है, इस प्रकार जनपद में मधुपति श्रीकृष्ण, श्रीराधामाधुर्य्यवेत्ता हैं और श्रीराधा ही मधुपति माधुर्य्यवेत्री हैं, इस परम रससुधा माधुरी धुरीण श्रीवृन्दारण्यस्थली, श्रीराधिका किंकरीगण को उभय का आस्वादनीय समस्त वस्तु प्रदान करती हैं॥१७६॥ श्रीवृन्दावन में प्रफुल्ल वदनकमला, नवीन व सुगंभीर

**अनङ्ग नवरङ्गिणी रसतरङ्गिणी सङ्गता,**
**दधत् सुखसुधामये स्वतनुनीरधौ राधिकाम्।**
**अहो मधुपकाकली मधुरमाधवीमण्डपे,**
**स्मरक्षुभित मेधते सुरतसीधुमत्तंमहः॥१७८॥**
**रोमाली मिहिरात्मजा सललितेबन्धुकबन्धुप्रभा,**
**सर्व्वाङ्गे स्फुटचम्पकच्छविरहो नाभीसरः शोभना।**

---

श्रीकृष्णः एव सिन्धुः तत् सङ्गमार्थं उन्मदो यस्याः सा कापि अनिर्वचनीया, सुरतरङ्गिणी, सुरतरङ्गिणी मन्दाकिनीरूपा- सुकृतरङ्गिणी कन्दर्प विलासिनी श्रीराधा, सदा जयति सर्वोत्कर्षेण वर्त्तते॥१७७॥ पृथ्वीवृत्तम्॥

अहो ! अत्याश्चर्य्ये, मधुपकाकलीमधुरमाधवीमण्डपे भ्रमराणां या काकली, तया मधुरं मुखरितं यन्माधवीमण्डपं वासन्तीलतागृहं तदभ्यन्तरे स्मर क्षुभितं कन्दर्पेण सुपीड़ितं, सुरतसीधुमत्तं कन्दर्पकेलिरसोन्मत्तं, महः श्रीश्यामसुन्दरः, सुखसुधामये स्वतनुनीरधौ सुखामृतपूर्णे निजतनुरेवसमुद्रे, अनङ्गनवरङ्गिणीरसतरङ्गिणी सङ्गतां राधिकां अनङ्गं कामंनवरङ्गैः रञ्जयति या सा अनङ्गरङ्गिणी एतादृशी रसतरङ्गिणीरूपेण मिलितां राधिकां, दधत्-धारणं कुर्वत्, एधते, वर्द्धते॥१७८॥ पृथ्वीवृत्तम्॥

अहो ! आश्चर्य्ये, रोमाली मिहिरात्मजा रोमावली या सैव यमुना रूपा यस्यां सा, बन्धूक बन्धुप्रभा बन्धुकश्च बन्धुस्तज्जातीय

---

आवर्त्त विशिष्टा नाभि, नितम्ब पुलिनशोभि मुखरकाञ्चि कादम्बिनीयुक्ता, विशुद्ध रसवाहिनी एवं रसिक सिन्धुसंगम हेतु उन्मादिनी, अनिर्वचनीया सुरतरंगिणी सर्वदा सर्वोत्कर्ष के साथ विराजित हैं॥१७७॥ अहो ! मधुर मधुप झंकृत माधवी मण्डप में क्षुभित व कन्दर्पकेलि रसोन्मत्त श्यामसुन्दर, सुखसुधामय निज तनु जलधि में अनंग नवरंगिणी रसतरंगिणी रूप में मिलिता श्रीराधिका को अवलम्बन कर वर्द्धित हो रहे हैं॥१७८॥

**वक्षोजस्तवकालसद्भुजलता शिञ्जापतच्छुङ्कृतिः,**
**श्रीराधाहरते मनो मधुपतेरन्येव वृन्दाटवी।।१७९।।**
**राधामाधवयो र्विचित्रसुरतारम्भे निकुञ्जोदरे,**
**स्रस्तप्रस्तरसङ्गतैर्वपुरलङ्कुर्वेऽङ्गरागैः कदा।**
**तत्रैव त्रुटिताः स्रजो निपतिताः सन्धाय भूयः कदा,**
**कण्ठे धारयितास्मि मार्जनकृते प्रातः प्रविष्टास्म्यहम्।।१८०।।**

---

पुष्पं तेषां प्रभा यस्याः सा, सुललिते सर्वाङ्गे स्फुटचम्पकच्छविः सर्वाङ्गे प्रफुल्लानां चम्पकानां च्छविः कान्तिर्यस्याः सा, नाभिसरः शोभना नाभिरेव सरोवर स्तेन शोभना शोभाविशिष्टा, वक्षोजस्तवका वक्षजौ एव स्तवकौ गुच्छौ यस्याः, लसद्भुजलता शोभमानौभुजौ एव लता यस्याः सा, शिञ्जापतच्छुङ्कृतिः, भूषणशब्द एव पक्षीणां कलध्वनिः यस्याः, सा श्रीराधा अन्या वृन्दाटवी इव मधुपतेः श्रीकृष्णस्य मनः हरते ॥१७९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहं प्रातः प्रातःकाले, मार्जनकृते प्रविष्टा केलिकुञ्जाभ्यन्तरं मार्जन निमित्तं प्रविष्टा सती, राधामाधवयोर्विचित्र सुरतारम्भे निकुञ्जोदरे निकुञ्जाभ्यन्तरे, स्रस्तप्रस्तर सङ्गतैः अङ्गरागैः विक्षिप्तः

---

अहो ! जिनकी रोमावली यमुना के समान है, बन्धूक बन्धुर चन्द्र के समान जिनकी अंगप्रभा, जिनके सुललित सर्वांग से प्रफुल्ल चम्पककान्ति विच्छुरित होती रहती है, जिनकी सरसी शोभना नाभि है, वक्षोज स्तवक के सदृश हैं, शोभायमान् भुजद्वय लतास्वरूप एवं जिनके भूषण शब्द विहंग की कलध्वनि तुल्य हैं, वह वृन्दाटवी तुल्या श्रीराधा मधुपति श्रीकृष्ण के चित्त को हरण कर रही हैं॥१७९॥

प्रातःकाल में सम्मार्जन के निमित्त निकुंज मन्दिर के मध्य में प्रविष्ट होकर, श्रीराधामाधव के विचित्र सुरतारम्भ से स्रस्त पल्लवादि विरचित शय्या में संलग्न अंगराग के द्वारा निज अंग को मैं कब भूषित करूँगी एवं उस स्थान में छिन्न एवं

**श्लोकान् प्रेष्ठयशोऽङ्कितान् गृहशुकानध्यापयेत् कर्हिचिद्,**
**गुञ्जामञ्जुलहार वर्ह मुकुटं निर्माति काले क्वचित्।**
**आलिख्यप्रियमूर्त्तिमाकुलकुचौ संघट्टयेद्वा कदा,**
**प्येवं व्यापृतिभिर्दिनं नयति मे राधाप्रियस्वामिनी।।१८१।।**
**प्रेयः सङ्गसुधा सदानुभवनि भूयो भवद्भाविनी,**
**लीलापञ्चमरागिणी रतिकलाभङ्गीशतोद्भाविनी।**

---

यत् प्रस्तरः पल्लवादि विरचितः यत् शयनीयः तत् संलग्नैः, कदा वपुः अलं कुर्वे भूषणं करिष्यामि, पुनः तत्रैव त्रुटिताः निपतिताः स्रजः माल्यम्, भूयः सन्धाय अहं कदा कण्ठे धारयितास्मि।।१८०।। शार्दूलविक्रीड़ितंवृत्तम्॥

मे मम, प्रियस्वामिनी प्रिया चासौ स्वामिनी, राधा, कर्हिचित् गृहशुकान् गृहे एव पालिताः ये शुका स्तान्, प्रेष्ठ यशोङ्कितान् प्रियतमस्य यशोव्यञ्जितान्, श्लोकान् गाथाः, अध्यापयेत् पाठयति, काले कथञ्चित् समये, क्वचित् एकान्ते, गुञ्जामञ्जुलहार वर्ह मुकुटं निम्मार्ति, गुञ्जाभिः सुन्दरं हारञ्च वर्हाणां मधुर पिञ्छानां मुकुटं तत् प्रियतोषार्थमेव रचयति, कदापि वा प्रियमूर्त्ति आलिख्य आकुल कुचौ सङ्घट्टयेत् तत्र लापयतीतिभावः एवं व्यापृतिभिः व्यापारैः दिनं नयति।।१८१।। शार्दूलविक्रीड़ितंवृत्तम्॥

प्रेयः सङ्गसुधासदानुभविनी प्रियतम श्रीकृष्णसङ्गं एव अमृतं तस्य सदानुभवकारिणी, भूयोभवद्भाविनी, पुनः पुनः भावि

---

निपतित पुष्पमाला को पुनः-पुनः ग्रन्थन कर कब मैं कण्ठ में धारण करूँगी? ।।१८०।।

प्रिय स्वामिनी श्रीराधा प्रिय विरह से व्याकुल होकर गृह शुक को प्रिय यशोङ्कित्त श्लोकावली का अध्ययन करा रही हैं एवं कभी एकान्त में अवस्थित होकर सुन्दर गुञ्जाहार, मयूर पिञ्छ की मुकुट रचना कर रही हैं एवं कभी प्रियतम की मूर्त्ति का अंकन कर निहार रही हैं, इस प्रकार चेष्टा से दिन यापन कर रही हैं।।१८१।।

**कारुण्याद् द्रवभाविनी कटितटे काञ्चीकलाराविणी,**
**श्रीराधैव गतिर्ममास्तुपदयोः प्रेमामृतस्राविणी।।१८२।।**
**कोटीन्दुच्छविहासिनी नवसुधासम्भारसंभाषिणी,**
**वक्षोजद्वितयेन हेमकलसश्रीगर्वनिर्वासिनी।**
**चित्रग्रामनिवासिनी नवनवप्रेमोत्सवोल्लासिनी,**
**वृन्दारण्य विलासिनी किमुरहोभूयादहृदुल्लासिनी।।१८३।।**

---

यत् तद् भावयति या सा, लीलापञ्चमरागिणी लीलायां यत्पञ्चमं सुरतव्यापारं तस्मिन् रागो यस्याः सा, रतिकलाभङ्गीशतोद्भाविनी रतिकलासु नित्यंशतभङ्गीरुद्भावनकारिणी, कारुण्यद्रवभाविनी करुणायां योद्रवः तद्भावयतीति सा, कटितटे काञ्चीकलाराविणी कटितटे यत् काञ्चीकलाः तासां राविणी शब्दकारिणी, पदयोः प्रेमामृत स्राविणी पदयोः प्रेमामृतं स्रावयतीति सा, श्रीराधा एव मम गतिः अस्तु॥१८२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

कोटिन्दुच्छवि विहासिनी कोटीन्दूनांच्छविकान्ति प्रकाशकारिणी कोटीन्दूनांच्छविं हसतीति वा, नवसुधासम्भार-सम्भाषिणी नवसुधायाः सम्भारः सम्भाषणंकारिणी, वक्षोजद्वितयेन हेमकलस श्रीगर्वनिर्वासिनी पयोधरयुगलेन स्वर्णकुम्भ श्रीगर्वनिरास-कारिणी, चित्रग्रामनिवासिनी चित्रगामी बृहद्भानुः तत्रनिवास

---

सर्वदा प्रियसंगसुधानुभवकारिणी, पुनः-पुनः भविष्यद् भाविनी, लीला पंचमरागिणी, रतिकला में शतशत भंगी उद्भावन-कारिणी, कारुण्य द्रवभाविनी, कटितट में काञ्चीकला शब्दकारिणी एवं पद युगल में प्रेमामृत स्राविणी श्रीराधा ही मेरी गति हों॥१२८॥

कोटिचन्द्र प्रभाविहासिनी, नवसुधासम्भार सम्भाषिणी, पयोधर युगल द्वारा कनककुम्भ श्रीगर्वनिर्वाशिनी, चित्रग्राम निवासिनी, नव-नव प्रेमोत्सव उल्लासिनी वृन्दावन विलासिनी श्रीराधा क्या सेवा प्रदान के द्वारा मुझे आनन्दित करेंगी ? ॥१८३॥

**कदा गोविन्दाराधनगलित्तताम्बूलशकलं,**
**मुदा स्वादं स्वादं पुलकिततनु र्मे प्रियसखी।**
**दुकूलेनोन्मीलन्नवकमलकिञ्जल्करुचिना,**
**निवीताङ्गी सङ्गीतकनिजकला: शिक्षयति माम्।।१८४।।**
**लसद्दशन मौक्तिकप्रवरकान्तिपूरस्फुर-**
**न्मनोज्ञनवपल्लवाधरमणिच्छटासुन्दरम्।**
**चरन्मकरकुण्डलं चकितचारुनेत्राञ्चलं,**
**स्मरामि तव राधिके वदनमण्डलं निर्मलम्।।१८५।।**

---

अस्ति यस्या:, नवनव प्रेमोत्सवोल्लासिनी नवनव प्रेम्नां य उत्सव: तमुल्लासयति उत्थापयति सा, वृन्दारण्य विलासिनी श्रीराधा रह: मम हृद उल्लासिनी किमुभूयात्।।१८३।। शार्दूलविक्रीड़ितंवृत्तम्।।

गोविन्दाराधन ललित ताम्बूल शकलं स्वादं स्वादं मुदा पुलकिततनु: श्रीकृष्णाराधनान्तरसङ्गीतमारब्धं, तत्र तत्र गोविन्द मुखाद् गलितं ताम्बूल खण्डम् स्वादं स्वादं आनन्देन पुलकिता तनुर्यस्या सा, उन्मीलन्नवकमलकिञ्जल्क रुचिना दुकूलेन आवृतानि अङ्गानि यस्या: सा, मे-मम, प्रियसखी, प्रियाया: राधाया: सखी ललितेतिभाव:, कदा सङ्गीतक निजकला: माम् शिक्षयति।।१८४।। शार्दूलविक्रीड़ितंवृत्तम्।।

हे राधिके ! तव लसद्दशनमौक्तिकप्रवरकान्तिपूरस्फुरन् मनोज्ञनवपल्लवाधरमणिच्छटासुन्दरम् तव शोभमानादशना एव

---

प्रफुल्ल नवकमलरुचि दुकूल के द्वारा अंग को आवृत्त कर एवं गोविन्दाराधनान्तर ललित ताम्बूल खण्ड का आस्वादन करते-करते आनन्द से पुलकित होकर मेरी प्रियसखी कब मुझे संगीत नाट्य की शिक्षा प्रदान करेंगी ? ।।१८४।। हे श्रीराधिके ! आपका वदनमण्डल, शोभायमान् दशनमुक्तावलि की कान्ति प्रवाह के द्वारा स्फुरित सुचारु नवपल्लवाधरमणिच्छटा के द्वारा

**चलत् कुटिलकुन्तलं तिलकं शोभिभालस्थलं,**
**तिलप्रसवनासिकापुटविराजिमुक्ताफलम्।**
**कलङ्करहितामृतच्छविसमुज्ज्वलं राधिके,**
**तवातिरति पेशलं वदनमण्डलं भावये।।१८६।।**
**पूर्णप्रेमामृतरससमुल्लाससौभाग्यसारं,**
**कुञ्जे कुञ्जे नवरतिकलाकौतुकेनात्तकेलि।**

---

मौक्तिक प्रवरा मौक्तिक श्रेष्ठास्तेषां या कान्तिः तस्याः यः पूरः प्रवाह स्तेन स्फुरन् मनोज्ञः यो नवपल्लव एव अधरः, तदेव मणिस्तस्य याः च्छटा स्ताभिः सुन्दरम्, चरन्मकर कुण्डलम्, चञ्चले मकराकारे कुण्डले यस्मिन् तत्, चकितनेत्राञ्चलम् चकितञ्चचारुञ्च नेत्रान्त भागो यस्मिन् तत्, निर्मलं वदनमण्डलं अहं स्मरामि॥१८५॥ पृथ्वीवृत्तम्॥

हे राधिके ! चलत् कुटिलकुन्तलं चञ्चलं कुटिलं केशं यस्मिन् तत्, तिलकशोभिभालस्थलं तिलकेन शोभमानं भालस्थलं यस्य तत्, तिलप्रसव नासिकापुट विराजि मुक्ताफलं तिलकुसुम सदृशं यन्नासिका पुटं तस्मिन् विराजितं मुक्ताफलं यस्मिन् तत्, कलङ्करहितामृतच्छवि समुज्ज्वलं कलङ्करहिता या अमृतच्छविः सुधांशुरित्यर्थः तेन समुज्ज्वलं यत्, अतिरति पेशलं, रत्याधिक्येन सुन्दरम्। तव वदनमण्डलं अहं भावये॥१८६॥ पृथ्वीवृत्तम्॥

पूर्णप्रेमामृत रससमुल्लास सौभाग्यसारं पूर्णप्रेमा एव अमृतरसः तेन समुल्लासः एव सौभाग्यसारं यस्मिंस्तत्, कुञ्जेकुञ्जे

---

सुन्दर है, उसमें मकरकुण्डल शोभित है एवं चारुनेत्रांचल चकित हैं, उन निर्मल वदनमण्डल का स्मरण मैं करती हूँ॥१८५॥ हे श्रीराधिके ! आपके जिस वदनमण्डल में कुंचित अलकावलि चंचलीकृत, भालस्थल में तिलक सुशोभित, तिल फूल सदृश नासिका में मुक्ताफल विराजित है एवं जो कलंक रहित अमृतच्छवि के द्वारा समुज्ज्वल है, उस प्रीत्याधिक्य हेतु सुन्दर वदनमण्डल की भावना मैं करती हूँ॥१८६॥

**उत्फुल्लेन्दीवरकनकयोः कान्तिचौरं किशोरं,**
**ज्योतिर्द्वन्द्वं किमपि परमानन्दकन्दं चकास्ति।।१८७।।**
**ययोन्मीलत् केलीविलसित कटाक्षैक कलया,**
**कृतोवन्दी वृन्दाविपिनकलभेन्द्रोमदकलः।**
**जड़ीभूतः क्रीड़ामृग इव यदाज्ञालवकृते,**
**कृती नः सा राधा शिथिलयतु साधारणगतिम्।।१८८।।**

---

नवरतिकला कौतुकेन आत्तकेलि कुञ्जे कुञ्जे नवरतौ याः कलाः तासां यत् कौतुकं तेन स्वकृता केलिर्येन तत्, उत्फुल्लेन्दीवरकनकयोः कान्तिचोरं विकसितं यद् इन्दीवरं नीलकमलं च कनकं स्वर्णकमलं च तयोः कान्तिं हरयतीति तत्, किमपि परमानन्दकन्दं अनिर्वचनीय परमानन्दस्य कन्दं उत्पत्तिस्थानं, किशोरं ज्योतिर्द्वन्द्वं चकास्ति शोभते।।१८७।। मन्दाक्रान्तावृत्तम्।।

थया उन्मीलत् केलीविलसितकटाक्षैक कलया उद्रेकं प्राप्ता या केली तद्विलसितं यत् कटाक्षं तस्यैक कलया, मदकलः मदमत्तः वृन्दाविपिन कलभेन्द्रः श्रीवृन्दावनस्य स्वच्छन्दचारी श्रीकृष्णः, कृतोवन्दी वन्दीकृतः भवति, यदाज्ञालवकृते यस्याः आज्ञालेशमात्रेण, कृती कुशलः चतुरः, क्रीड़ामृग इव जड़ीभूतः वशीभूतः भवति, सा राधा नः अस्माकं, साधारणगतिं संसारगतिं च मुक्तिमपि वा, शिथिलयतु शिथिलं करोतु।।१८८।। शिखरिणीवृत्तम्।।

---

जिनमें पूर्णप्रेमरूप अमृत रस के द्वारा समुल्लासरूप सौभाग्यसार विद्यमान है, जो नवरतिकला कौतुक में, कुञ्ज-कुञ्ज में केलि परायण हैं, जो-जो प्रफुल्ल इन्दीवर कनककमल की कान्ति के अपहरणकारी हैं, वे किशोराकृति ज्योतिः युगल, अनिर्वचनीय परमानन्दकन्दस्वरूप में शोभित हैं।।१८७।। जिनकी उन्मीलित केलिविलसित कटाक्ष की एक कला के द्वारा मदकल वृन्दावन करभेन्द्र श्रीकृष्ण भी वशीभूत होते हैं एवं जिनकी आज्ञा

**श्रीगोपेन्द्रकुमारमोहनमहाविद्येस्फुरन्माधुरी,**
**सारस्फाररसाम्बुराशिसहजप्रस्यन्दिनेत्राञ्चले।**
**कारुण्यार्द्रकटाक्षभङ्गिमधुरस्मेराननाम्भोरुहे,**
**हा हा स्वामिनि राधिके मयि कृपादृष्टिं मनाङ्निक्षिप।।१८९।।**
**ओष्ठप्रान्तोच्छलित दयितोद्गीर्णताम्बुलरागा,**
**रागानुच्चैर्निजरचितया चित्रभङ्ग्योन्न्यन्ती।**

---

हे गोपेन्द्रकुमार मोहन महाविद्ये नन्दनन्दन मोहनार्थं महाविद्यारूपे, हे स्फुरन् माधुरी सारस्फार रसाम्बुराशि सहज प्रस्यन्दि नेत्राञ्चले प्रकाशमानाया माधुरी तस्याः यः सारः तस्यस्फारो विस्तारः स एव रससमुद्र तस्य सहजे प्रस्यन्दनं प्रस्रवणं नेत्रान्तभागौ यस्याः, हे करुणार्द्र कटाक्षभङ्गि कारुण्येण आर्द्रः यः कटाक्षः भङ्गी यस्याः हे तथाभूता, हे मधुर स्मेराननाम्भोरुहे- मधुरश्चासौ स्मेरः मन्द हास्यंयुक्तं मुखकमलं यस्याः हे तथाभूते, हे स्वामिनि ! हे श्रीराधिके ! हाहाः खेदे त्वं मयि कृपादृष्टिं मनाक् ईषत्, निःक्षेप।।१८९।। शार्दूलविक्रीड़ितंवृत्तम्।। ओष्ठप्रान्तोच्छलितदयितोद्गीर्णताम्बूलरागा दयितस्य श्रीकृष्णस्य मुखोद्गीर्णं यत्ताम्बूलं तस्य रागः उच्छलितः ओष्ठ यस्याः सा, यद्वा ओष्ठ प्रान्ताभ्यामुच्छलितो रयितार्थमुद्गीर्णताम्बूलस्य रागोयस्य सा, निजरचितया चित्रभङ्ग्या उच्चैः रागान् उन्नयन्ती-

---

लेशमात्र से कृतार्थ होकर भी क्रीड़ामृग के समान रहते हैं, वे श्रीराधा हमारी साधारण गति को शिथिल करें॥१८८॥ हे नन्दनन्दन के मोहनार्थ महाविद्यारूपे ! हे स्फुरित माधुरी सारविस्तारो रससमुद्र के सहज प्रस्यन्दि नेत्रांजले ! हे करुणार्द्र कटाक्षभङ्गि ! हे मधुर स्मेराननकमले ! हे स्वामिनी ! हे श्रीराधिके ! मेरे प्रति कृपादृष्टि प्रदान करो॥१८९॥ जिनके ओष्ठप्रान्त में दयित श्रीकृष्ण के मुखोद्गीर्ण ताम्बूलराग उच्छलित है, जो निज रचित चित्रभङ्गी वीणा के द्वारा उच्चैस्वर से ललितादि राग आलाप कर रही हैं,

**तिर्यग् ग्रीवा रुचिररुचिरोदञ्चदाकुञ्चितभ्रूः,**
**प्रेयः पार्श्वे विपुलपुलकैर्मण्डिता भाति राधा।।१९०।।**
**किं रे धूर्त्त प्रवरनिकटं यासि नः प्राणसख्या,**
**नूनं वाला कुचतटकरस्पर्शमात्राद् विमुह्येत्।**
**इत्थं राधे पथि पथि रसान्नागरं तेऽनुलग्नं,**
**क्षिप्त्वाभङ्गन्याहृदयमुभयोः कर्हि संमोहयिष्ये।।१९१।।**
**कदा वा राधायाः पदकमलमायोज्य हृदये,**
**दयेशं निःशेषं निरतमिह जह्यामुपविधिम्।**

---

स्वेनरचिता या चित्रभङ्गी वीणा तया रागान् ललितादिन् उच्चैः उन्नयन्ती गायन्ती, तिर्य्यग्ग्रीवा रागोन्नयनार्थमेव ईषद्वक्रीभूता ग्रीवा यस्याः सा, रुचिर रुचिरोदञ्चदाकुञ्चितभ्रूः रुचिरञ्च रुचिर यथा भवति तथा उपरि आकुञ्चिता भ्रूः यया सा, राधा प्रियः पार्श्वे प्रियस्य निकटे, विपुल पुलकैः मण्डिता सती आभाति॥१९०॥ मन्दाक्रान्तावृत्तम्॥

हे धूर्त्तप्रवर ! हे विदग्धवर ! नः अस्माकं, प्राणसख्याः श्रीराधायाः, निकटं किं यासि किमर्थं यासि ? दूरेवर्त्तस्व, निषेध एवाभिप्रायः, नून कुचतटकरस्पर्शमात्रात् सा वाला विमुह्येत् मोहं प्राप्यति, हे राधे ! इत्थं भङ्गया वाग्वैदग्ध्येन, रसात् पथिपथिते तव, अनुलग्नन् अनुगामिनं, नागरं श्रीकृष्णं, क्षिप्त्वा दूरे संस्थाप्य, अहं उभयोः हृदयं कर्हि संमोहयिष्ये॥१९१॥ मन्दाक्रान्तावृत्तम्॥

---

जिनकी ग्रीवा वक्रीभूता है, रुचिर से रचिततर रूप में उत्क्षेप हेतु जिनके भ्रूदेश आकुञ्चित है, उन श्रीराधा प्रियतम के निकट में विपुल पुलक से विमण्डित होकर शोभित हैं॥१९०॥

हे धूर्त्तराज ! हमारी प्राणसखी श्रीराधा के निकट क्यों जा रह हो ? कुचतट स्पर्शमात्र से ही वालायें मोहित हो जाती हैं। हे श्रीराधे ! इस प्रकार वाग्वैदग्धी के द्वारा आपके अनुगामी रसिक नागर को अपसारित कर कब मैं आप दोनों के हृदय को मुग्ध करूँगी॥१९१॥

**कदा वा गोविन्दः सकलसुखदः प्रेमकरणा,**
**दनन्ये धन्ये वै स्वयमुपनयेत स्मरकलाम्।।१९२।।**
**कदा वा प्रोद्दामस्मरसमरसंरम्भरभस,**
**प्ररूढ़स्वेदाम्भः प्लुतलुलितचित्राखिलातनू।**
**गतौ कुञ्जद्वारे सुखमारुति संबीज्यपरया,**
**मुदाहं श्रीराधारसिकतिलकौ स्यां सुकृतिनी।।१९३।।**

---

अहं राधायाः दयेशं दयायाः स्वामिनं, पदकमलं कदा वा हृदये आयोज्य आसमन्ताद् योजयित्वा, इह संसारे नियतं नित्यागतं, निःशेषं शेषशून्यं, उपविधिं जह्याम् दूरी करोमि, कदा वा सफलसुखदः गोविन्दः प्रेमकरणात् प्रेमसेवाधिकार कारणम्, अनन्ये धन्ये अनन्यो भवति, अयं तस्मादेव धन्यो तादृशे मयि स्मरकलां कन्दर्पनैपुण्यं स्वयं वै उपनयेत् समीपेनेष्यतीति भावः।।१९२।। शिखरिणीवृत्तम्।।

अहं प्रोद्दामस्मरसमरसंरम्भरभसप्ररूढ़स्वेदाम्भः प्लुतलुलित चित्राखिलतनू उद्दीप्तकन्दर्पयुद्धस्य यत् संरम्भः विक्रमः तस्य यो रभसः वेगः तज्जनितं प्ररूढ़ं उपरिगतं यत् स्वेदजलं तेनार्द्रोभूते शिथिलिते विचित्ररूपे तनू ययास्तौ, सुखमारुति व्यजनेन निःसृतः सुखस्पर्शपवनो यस्मिन् तत्, कुञ्जद्वारे गतौ प्राप्तौ, राधारसिक तिलकौ श्रीराधा च रसिक तिलकश्च श्रीकृष्णश्च तौ, परयामुदा

---

उद्दीप्त कन्दर्प युद्ध का विक्रमावेग के निमित्त उद्गत स्वेदजल से जिनके तनुयुगल, आर्द्रोभूत, शिथिल तथा विचित्र रूप धारण किया है, वे श्रीराधा रसिकतिलक कुंज द्वार में समासीन होने से कब मैं उन दोनों को सुखसेव्य व्यजन कर सुकृतिनी बनूँगी ? ।।१९२।।

उद्दीप्त कन्दर्प युद्ध के विक्रमावेग के निमित्त उद्गत स्वेदजल से जिनके तनुयुगल आर्द्रोभूत, शिथिल एवं विचित्ररूप धारण किये हैं, वे श्रीराधा रसिकतिलक युगल कुञ्जद्वार में समासीन होने पर मैं कब उनका सुखसेव्य व्यजन कर सुकृतिनी बनूँगी ? ।।१९३।।

**मिथः प्रेमावेशाद् घनपुलकदोर्वल्लिरचित,**
**प्रगाढ़ाश्लेषेणोत्सवरसभरोन्मीलितदृशौ।**
**निकुञ्जक्लप्ते वै नवकुसुमतल्पेऽभिशयितौ,**
**कदा पत्संवाहादिभिरहमधीशौ नु सुखये।।१९४।।**
**मदारुण विलोचनं कनकदर्पकामोचनं,**
**महाप्रणयमाधुरीरसविलासनित्योत्सुकम्।**
**लसन्नववयःश्रिया ललितभङ्गिलीलामयं,**
**हृदा तदहमुद्वहे किमपि हेमगौरं महः।।१९५।।**

---

परमहर्षेण, संवीज्य कदा वा सुकृतिनी सौभाग्यशालिनी स्याम्॥१९३॥ शिखरिणीवृत्तम्॥

निकुञ्ज क्लप्ते नवकुसुम तल्पेऽधिशयितौ कुञ्जाभ्यन्तरं प्राप्ते नवकुसुम रचित शय्यायां अधिशयितौसुप्तौ, मिथः प्रेमावेशाद्घन पुलकदोर्वल्लिरचितप्रगाढ़ाश्लेषेणोत्सव रसभरोन्मीलितदृशौ परस्परं प्रेमावेश जन्यबहुपुलकाञ्चिता या भुजलता तया रचितो यः प्रगाढ़ालिङ्गनं तस्य यः उत्सवः व्यापारः तत् रसभरेण उन्मीलितौ दृशौ याभ्यां तौ, अधीशौ कदानु सुखये, अधिस्वाम्यां प्रियाप्रियाभ्यां सुखं कदा दास्यामीत्यर्थः॥१९४॥ शिखरिणीवृत्तम्॥

लसन्नववयः श्रिया ललितभङ्गिलीलामयं शोभमानं यन्नववयः तस्यश्रिया ललिता या भङ्गिनां लीलां तन्मयं, महाप्रणयमाधुरी रसविलास नित्योत्सुकम् महाप्रणये या माधुरी तस्यां योरसः तस्य विलासे नित्यमुत्सुकं यत्तत्, मदारुण विलोचनं

---

निकुंजाभ्यन्तरस्थित नवकुसुमरचित शय्या में शयित एवं परस्पर प्रेमावेश जनित बहु पुलकाञ्चित भुजलता पाश से रचित आलिंगनोत्सव रसावेश से उन्मीलित दृष्टि अधिस्वामी युगल को पाद सम्बाहन के द्वारा मैं कब सुखी करूँगी॥१९४॥ जो शोभायमान् नववयः श्री द्वारा ललितभङ्गी लीलाम्मय, महाप्रणय माधुरी रसविलास निमित्त नित्योत्सुक, मदारुण लोचन एवं कनक दर्पहारी

**मदा घूर्णन्नेत्रं नवरतिरसावेशविवशो-**
**ल्लसद् गात्रं प्राण:प्रणयपरिपाट्यां परतरम्।**
**मिथोगाढ़ाश्लेषाद्वलयमिव जातं मरकत,**
**द्रुतस्वर्णच्छायं स्फुरतु मिथुनं तन्मम हृदि।।१९६।।**
**परस्परं प्रेमरसे निमग्नमशेषसन्मोहनरूपकेलि।**
**वृन्दावनान्तर्नवकुञ्जगेहे तन्नीलपीतं मिथुनं चकास्ति।।१९७।।**

---

मदेन अरुणे विलोचने यस्य तत्, कनक दर्पकामोचनं कनकस्य गर्वमोचययतीति यत्, तत् किमपि अनिर्वचनीयं, हेमगौरं महः-रूपं, अहं हृदा हृदयेन, उद्वहे ध्यानयोगेन धारयिष्ये॥१९५॥ पृथ्वीवृत्तम्॥

नवरति रसावेश विवशोल्लसद्गात्रं प्राणः नवरतौ यो रसावेशः तेन उल्लसति अङ्गानि च प्राणश्च ययोः, प्रणयपरिपाट्यां परतरम् प्रणयस्य या परिपाटी तस्यां श्रेष्ठतरं, मिथोगाढ़ा-श्लेषाद्वलयमिव जातं परस्परं गाढ़ालिङ्गनेन वलयाकारं प्राप्तं, मदाघूर्णनेत्रं मोहेनाघूर्णन्ती नेत्रे ययोः तत्, मरकतद्रुतस्वर्णच्छायम् इन्द्रनीलमणिश्च द्रवीभूतं स्वर्णञ्च तच्छायारूपं ययोः तत्, मिथुनं श्रीराधाश्यामयुगलं, मम हृदि स्फुरतु॥१९६॥ शिखरिणीवृत्तम्॥

वृन्दावनान्त र्नवकुञ्जगेहे श्रीवृन्दावनान्तर्वर्त्ति नवकुञ्जगेहे, परस्परं प्रेमरसे निमग्नं अशेषसम्मोहनरूपकेलि अशेषं सम्मोहयन्ती

---

हैं, उन अनिर्वचनीय हेमगौररूप को मैं हृदय में धारण करूँ॥१९५॥

नवरति रसावेश से जिनके अंग एवं प्राण उल्लसित हैं, प्रणय-परिपाटी से परस्पर हैं, परस्पर गाढ़ालिंगन में वलयाकार प्राप्त हैं, मदाघूर्णनेत्र हैं एवं मरकत तथा गलित सुवर्णकान्ति विशिष्ट श्रीयुगलरूप मेरे हृदय में स्फुरित हों॥१९६॥ श्रीवृन्दावन के नवनिकुंज गृह में परस्पर प्रेमरस में निमग्ना एवं अशेष सम्मोहनरूप केलिविशिष्ट नीलपीत युगलरूप शोभा प्राप्त हो रहे हैं॥१९७॥

**आशास्य दास्यं वृषभानुजाया स्तीरे समध्यास्य च भानुजायाः,**
**कदानु वृन्दावनकुञ्जवीथीष्वहं नु राधे ह्यतिथिर्भवेयम्।।१९८।।**
**कालिन्दीतटकुञ्जे पुञ्जीभूतं रसामृतं किमपि।**
**अद्भुत केलिनिधानं निरवधि राधाभिधानमुल्लसति।।१९९।।**
**प्रीतिरिव मूर्त्तिमती रससिन्धोः सारसम्पदिव विमला।**
**वैदग्धीनां हृदयं काचन वृन्दावनाधिकारिणी जयति।।२००।।**

---

एवं रूपाः केलयश्च ययोः तत्, नीलपीतं मिथुनं श्रीराधाकृष्ण युगलं, चकास्ति शोभते॥१९७॥ (स्यादिन्द्रवज्रा यदि तौ जगौ गः)

हे श्रीराधे ! वृषभानुजायाः त्वं वृषभानुनन्दिनी यस्याः, दास्यं कैङ्कर्य्यं, आशास्य आकाङ्क्षां कृत्वा, च भानुजायाः तीरे समध्यास्य श्रीयमुनातीरे सम्यक् प्रकारेण स्थित्वा, अहं कदानु वृन्दावन कुञ्जवीथीषु अतिथिः, आगन्तुकः अद्यैव आगत इव वा निश्चितम् भवेयम् स्याम्॥१९८।इन्द्रवज्रा॥

कालिन्दीतटकुञ्जे किमपि अनिर्वचनीयं, पुञ्जीभूतं रसामृतं निरवधि अद्भुतकेलिनिधानं निरन्तरं अद्भुता याः केलयः तन्निधानं निधीयते अस्मिन्निति निधानम्, राधाभिधानम् उल्लसति॥१९९॥ (गीतिवृत्तम् तल्लक्षणं-आर्या प्रथमार्द्ध समं यस्या अपरार्द्धमाह तां गीतिम्)

मूर्त्तिमती प्रीतिरिव रससिन्धोः श्रीकृष्णस्य, विमला सारसम्पदिव निर्म्मला साररूपा सम्पत् श्रीरिव, वैदग्धीनां हृदयं ललितादीनां विदग्धानां हृदयरूपा काचन वृन्दावनाधिकारिणी श्रीवृन्दावनेश्वरी, जयति सर्वोत्कर्षेण वर्त्तते॥२००।गीतिवृत्तम्॥

---

हे श्रीराधे ! वृषभानुनन्दिनी ! आपके कैङ्कर्य लाभ की आकांक्षा कर तथा भानुजा यमुना के तीर में अध्यासीना होकर मैं कब श्रीवृन्दावन कुंज पथ की अतिथि बनूँगी ? ॥१९८॥
कालिन्दीतट कुंज में अनिर्वचनीय पुंजीभूत रसामृतस्वरूप एवं निरवधि अद्भुत केलिनिधानस्वरूप श्रीराधा उल्लसित हैं॥१९९॥

**रसघनमोहनमूर्त्ति विचित्र केलिमहोत्सवोल्लसितम्।**
**राधाचरणविलोड़ितरुचिरशिखण्डं हरिं वन्दे॥२०१॥**
**कदा गायं गायं मधुरमधुरीत्यामधुभिद-**
**श्चरित्राणि स्फारामृतरसविचित्राणि बहुशः।**
**मृजन्तीतत् केलीभवनमभिरामं मलयज,**
**च्छटाभिः सिञ्चन्ती रसह्रदनिमग्नास्मि भविता॥२०२॥**

---

विचित्र केलिमहोत्सवोल्लसित विचित्राः या केलयः तासां महोत्सवैः उल्लसितं प्रफुल्लं यः तत्, रसधनमोहनमूर्त्ति रस एव धनः मेघस्वरूपः तन्मोहनमूर्त्तिर्यस्य तं, राधाचरणविलोड़ितरुचिर शिखण्डं श्रीराधाचरणे इतस्ततः चलितं रुचिरं सुन्दरं शिखिपुञ्छ्युक्तं मुकुटं यस्य तं, श्रीहरिं श्रीकृष्णं अहं वन्दे भजामि॥२०१॥ आर्यावृत्तम्॥

अहं तत् अभिरामं केलिभवनं मृजन्ती तत् तस्य श्रीकृष्णस्य अभिरामं सुन्दरं सर्वतो रसवदित्यभिरामं वा एतादृश केलिभवनं क्रीड़ा स्थानं मार्जयन्ती च, मलयजच्छटाभिः सिञ्चन्ती चन्दनच्छटाभिः सिञ्चन्ती, स्फारामृतरसविचित्राणि प्रचुरामृतरसै र्विचित्राणि, मधुभिदश्चरित्राणि नन्दनन्दनस्य चरित्राणि मधुर मधुरीत्या मधुरादपि मधुश्चासौ रीतिश्च तया, बहुशः गायं गायं कदा रसह्रदे निमग्ना भवितास्मि॥२०२॥ शिखरिणीवृत्तम्॥

---

मूर्त्तिमती प्रीति स्वरूपिणी, रससिन्धु श्रीकृष्ण के सार सम्पद के समान एवं विदग्धागणों की हृदयरूपा श्रीवृन्दावनाधीश्वरी सर्वोत्कर्ष के साथ विराजित हैं॥२००॥ जो विचित्र केलि महोत्सव से उल्लसित हैं एवं जिनकी सुन्दर शिखिचूड़ा श्रीराधा के चरणों में इतस्ततः विलीड़ित है, उन रसधन मोहनमूर्त्ति श्रीहरि का मैं भजन करती हूँ॥२०१॥ श्रीकृष्ण के अभिराम केलि भवन को सम्मार्जित एवं मलयज च्छटा द्वारा अभिषिक्त करने के समय मधुभिद् श्रीकृष्ण की प्रचुरामृत रसविचित्र चरितगाथा का गान

**उदञ्चद्रोमाञ्च प्रचयखचितां वेपथुमतीं,**
**दधानां श्रीराधामतिमधुरलीलामयतनुम्।**
**कदा वा कस्तूर्य्या किमपि रचयन्त्येव कुचयो,**
**र्विचित्रां पत्रालीमहमहह वीक्षे सुकृतिनी।।२०३।।**
**क्षणं शीत्कुर्वाणा क्षणमथ महावेपथुमती,**
**क्षणं श्यामश्यामेत्यमुमभिलपन्ती पुलकिता।**
**महाप्रेमा कापि प्रमदमदनोद्दामरसदा,**
**सदानन्दा मूर्त्ति र्जयति वृषभानोः कुलमणिः।।२०४।।**

---

अहह अत्याश्चर्य्ये, कस्तूर्य्या कुचयोः किमपि विचित्रां पत्रालीं रचयन्ती एव सुकृतिनी कस्तूरीपङ्केन तस्याः कुचयोः अनिर्वचनीयां चमत्कारां पत्रावलीं श्रीकृष्णेन रचयन्ती तत्तोषार्थमेव, सुकृतिनी सुकृतार्थासती, अहं कदा वा उदञ्चद्रोमाञ्च प्रचयखचितां उद्गत रोमाञ्चसमूहेन शोभितां, वेपथुमती कम्पान्वितां, अतिमधुरलीलामय तनुं दधानां अतिमधुरा या लीला तन्मयी तनु धारिणीं, श्रीराधां वीक्षे॥२०३॥ शिखरिणीवृत्तम्॥

कापि अनिर्वचनीया, प्रमदमदनोद्दाम रसदा प्रमदयुक्तो यो मदनः तस्य उद्दामरसं ददातीति सा, महाप्रेमा महत् प्रेमयस्यां सा सदानन्दा मूर्त्ति सर्वदैव आनन्दस्य मूर्त्तिर्यस्याः सा, वृषभानोः कुलमणिः, वृषभानोः कुलोज्ज्वलकारिणी मणिस्वरूपा श्रीराधा, क्षणं सीत्कुर्वन्ती कस्मिञ्चित् समये सीत्कारं कुर्वन्ती, अथ क्षणं महावेपथुमती अनन्त कस्मिञ्चित् क्षणे महाकम्पयुक्ता सती, पुनः हे श्याम ! हे श्याम ! इति अमुं श्रीकृष्णं, अभिलपन्ती च पुनः पुलकिता सती जयति॥२०४॥ शिखरिणीवृत्तम्॥

---

मधुरादपि मधुर रीति से करके कब मैं रसह्रद में अपने को निमज्जित करूँगी ? ॥२०२॥ अहो ! कस्तूरी द्वारा वक्षोज युगल में अनिर्वचनीय विचित्रा पत्रावली की रचना कर सुकृतिनी होकर मैं कब उद्गतरोमाञ्च शोभिता कम्पान्विता, अति मधुर लीलामय तनुधारिणी श्रीराधा का दर्शन करूँगी ? ॥२०३॥

**यस्याः प्रेमघनाकृतेः पदनखज्योत्स्नाभरस्नापित,**
**स्वान्तानां समुदेति कापि सरसाभक्तिश्चमत्कारिणी।**
**सा मे गोकुलभूपनन्दनमनश्चोरी किशोरी कदा,**
**दास्यं दास्यति सर्ववेदशिरसां यत्तद्रहस्यं परम्॥२०५॥**
**कामं तुलिकया करेण हरिणा यालक्तकैरङ्किता,**
**नानाकेलिविदग्धगोपरमणीवृन्दैस्तथावन्दिता।**

---

यस्याः पदनखज्योत्स्नाभर स्नापित स्वान्तानां यस्याः पदनखेषु या ज्योत्स्नाः तस्याः प्रवाहेन आर्द्रीभूतं स्वान्तं मानसं येषां तेषां कापि अनिर्वचनीया, चमत्कारिणी अलौकिकीसरसा मधुररसयुक्ता, भक्ति समुदेति सम्यग् उदेति, सा प्रेमधनाकृतेः प्रेम्नः घना एव आकृति र्यस्याः सा, गोकुलभूपनन्दन मनश्चौरी गोकुलभूपः नन्दः तस्य तनयः श्रीकृष्णः तन्मनोहारिणी, किशोरी श्रीराधा, मे मह्यं प्रति, तत् सर्ववेदशिरसां परं रहस्यं तद् दास्यं कदा दास्यति॥२०५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

अनिर्वचनीय प्रमद मदनोद्दाम रसदा, महाप्रेमवती सदानन्दमूर्त्ति वृषभानुकुलमणि श्रीराधा कभी सीत्कार करती हैं तो कभी महाकम्पान्विता होती हैं कभी तो हे श्यामसुन्दर ! हे श्यामसुन्दर ! कहकर श्रीकृष्ण के साथ अभिलाप करते-करते पुलकिता होकर सर्वोत्कर्ष के साथ विराजित हैं॥२०४॥ जिनकी पदनखकौमुदी धारा से हृदय अभिषिक्त होने से अनिर्वचनीया चमत्कारिणी सरसा भक्ति उदित होती है, उन गोकुलेन्द्रनन्दन श्रीकृष्ण की मनोहरणकारिणी श्रीकिशोरीजी मुझे सर्ववेद शिरोमणि का परम रहस्य स्वरूप दास्यता प्रदान कब करेंगी ? ॥२०५॥ जो श्रीहरि के निज हस्त द्वारा इच्छानुरूप अलक्तक राग से रंजित हैं, जो विविध केलिकुशला गोपांगना समूह द्वारा वन्दित हैं एवं जो उपनिषद् समूह के हृदय में गुप्तभाव से विद्यमान हैं, वह नृत्यमात्र

**या संगुप्ततयातथोपनिषदां हृद्येव विद्योतिते,**
**सा राधाचरणद्वयी ममगतिर्लास्यैक लीलामयी।।२०६।।**
**सान्द्रप्रेमरसौघवर्षिणि नवोन्मीलन्महामाधुरी,**
**साम्राज्यैकधुरीणकेलिविभवद् कारुण्यकल्लोलिनि।**
**श्रीवृन्दावनचन्द्रचित्तहरिणीबन्धुस्फुरद्वागुरे,**
**श्रीराधे नवकुञ्जनागरी तव क्रीतास्मि दास्योत्सवैः।।२०७।।**

---

या हरिणाकरेण कामं तुलिकया अलक्तकैरङ्किता या श्रीकृष्णेन करेण कामं तदिच्छानुसारेण तुलिकया अलक्तकरसैः अङ्किता चित्रिता तथा नाना केलिविदग्धगोपरमणीवृन्दैर्वन्दिता विविधकेलि निपुणा गोपाङ्गनासमूहैः पूजिता तथा या उपनिषदां हृदि एव संगुप्ततया विद्योतते, विशेषेण प्रकाशमाना तिष्ठति, सा लास्यैक-लीलामयी नृत्यलीलामयी, राधाचरणद्वयी मम गतिः स्यात्॥२०६॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे सान्द्र प्रेमरसौघवर्षिणि सान्द्रः निविड़ः यः प्रेमा स एव रसप्रवाहः तद्वर्षितुं शोलेति वर्षिणी तत् सम्बोधनम्, हे नवोन्मीलन् महामाधुरी साम्राज्यैकधुरीणकेलिविभवत् कारुण्य कल्लोलिनी नवीना शोभमाना या महामाधुरी तस्या यत् साम्राज्यं तस्यैका श्रेष्ठा या केलिविभवयुक्तस्य कारुण्यस्य कल्लोलिनी नदीस्वरूपा या हे तथाभूते, हे श्रीवृन्दावनचन्द्र चित्तहरिणीबन्धुस्फुरद् वागुरे श्रीवृन्दावनचन्द्रस्य श्रीकृष्णस्य चित्तमेव हरिणीबन्धुः कुरङ्गः तद्

---

लीलामयी श्रीराधा के चरणद्वयी मेरी गति होवें॥२०६॥

हे निविड़-प्रेमरस प्रवाहवर्षिणी ! हे नवोन्मीलित महामाधुरी साम्राज्य की सर्वश्रेष्ठ केलिविभवयुक्त कारुण्य कल्लोलिनी ! हे श्रीवृन्दावनचन्द्र के चित्तकुरंग के बन्धनार्थ प्रकाश्य वागुरास्वरूपे! हे नवकुंजनागरि ! हे श्रीराधे ! मैं आपके दास्योत्सव के द्वारा क्रीत हूँ॥२०७॥

**स्वेदापूरः कुसुमचयनै र्दूरतः कण्टकाङ्को,**
**वक्षोजेऽस्यास्तिलकविलयो हन्त धर्माम्भसैव।**
**ओष्ठः सख्या हिमपवनतः सव्रणो राधिके ते,**
**क्रूरास्वेवं स्वघटितमहो गोपये प्रेष्ठसङ्गम्।।२०८।।**
**पातं पातं पदकमलयोः कृष्णभृङ्गेण तस्याः,**
**स्मेरास्येन्दोर्मुकुलितकुचद्वन्द्वहेमारविन्दम्।**

---

बन्धनार्थमेव स्फुरन्ती प्रकाशमान् वागुरारूपा या हे तथाविधे ! हे नवकुञ्ज नागरि ! श्रीराधे ! तव दास्योत्सवैः अहं क्रीतास्मि॥२०७॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो ! अत्याश्चर्य्ये, हे श्रीराधिके ! सख्याः अयं स्वेदापूरः दूरतः कुसुमचयनैः अयं स्वेदप्रवाहः सुदूरात् पुष्पचयनैः जातोऽस्ति नतु प्रियसङ्गमेन, अस्याः वक्षोजे स्तने, कण्टकाङ्कः कण्टकस्य अङ्कः नतु प्रियनखक्षतः, हन्त-खेदे, अस्याः तिलकविलयः धर्माम्भसा एव अस्या स्वेदजलेनैवतिलकमार्जनं नतु प्रिय सङ्गमेन, सख्याः ओष्ठः शीतलवायुना सव्रणः नतु प्रियदशनाहतः, एवम्प्रकारेण क्रूरासु प्रतिकुलपक्षासु तव स्वघटितं स्वयमेवत्वया रचितं, प्रेष्ठं सङ्गं प्रियसङ्गं श्रीकृष्णसङ्गमित्यर्थः, अहं गोपनं करिष्यामि॥२०८॥ मन्दाक्रान्तावृत्तम्॥

तस्याः पदकमलयोः पातं पातं पुनः पुनः पतित्वा, अतिरसात् अतिमधुररसत्वात्, वक्त्राम्बुजं पीत्वा मुखकमलस्य मधुपीत्वा, नूनं अत्यावेशात् अन्तः प्रवेष्टुं अभ्यन्तरं प्रवेशकर्त्तुं, स्मेरास्येन्दोः मृदुहास्ययुक्तं आस्यमेव इन्दुर्यस्याः तस्याः,

---

अहो ! हे श्रीराधिके ! दूर से पुष्प चयन के कारण ही प्रियसखी का यह स्वेद प्रवाह है, वक्षोज में जो क्षत है, यह कण्टकाङ्क है । हाय ! धर्म्मजल से तिलक विलीन हुआ है और ओष्ठ में जो व्रण उद्गत हुआ है, वह हिमवायु स्पर्श से ही उद्भूत है, इस प्रकार से विपक्षगण के निकट आपके स्वयं कृतप्रियसंग को गोपन करूँगी।।२०८॥

**पीत्वावक्त्राम्बुजमतिरसान्नूनमन्तः प्रवेष्टु,**
**मत्यावेशान्नखरशिखया पाट्यमानं किमीक्षे।।२०९।।**
**अहो तेऽमी कुञ्जास्तदनुपमरासस्थलमिदं,**
**गिरिद्रोणी सैव स्फुरति रतिरङ्गे प्रणयिनी।**
**न वीक्षे श्रीराधां हरि हरि कुतोऽपीति शतधा,**
**विदीर्य्येत प्राणेश्वरि मम कदा हन्त हृदयम्।।२१०।।**
**इहैवाभूत् कुञ्जे नवरतिकला मोहनतनो,**
**रहो अत्रानृत्यद् दयित सहिता सा रसनिधिः।**

---

मुकुलितकुचद्वन्द्व हेमारविन्दम् स्फुटोन्मुखं कुचद्वयमेव स्वर्णकमलं, कृष्णभृङ्गेण नखरशिखया पाट्यमानं विदीर्य्यमानं, अहं किं ईक्षे पश्यामि॥२०९॥ मन्दाक्रान्तावृत्तम्॥

अहो अत्याश्चर्य्ये, अभी ते कुञ्जाः, इदं अनुपम रासस्थलं, सैव रतिरङ्गे प्रणयिणी गिरिद्रोणी गोवर्द्धनगिरि कन्दरा, स्फुरति, हर हर, कष्टे वीप्सा, श्रीराधां कुतोऽपि न वीक्षे, हन्त खेदे, हे प्राणेश्वरि ! मम हृदयं कदा शतधा विदीर्य्येत, शतशत खण्डं भवेत्॥२१०॥ शिखरिणीवृत्तम्॥

---

पदकमल में पुनः–पुनः पतित होकर एवं अति रसहेतु मुखकमल का मधुपान कर अतिशय आवेश से अन्तःस्थल में प्रविष्ट होने के निमित्त श्रीकृष्णभृंग, उन मधुर हास्ययुक्त चन्द्रमुखी के मुकुलित कुचयुगरूप कनक कमल को नखरशिखर द्वारा विदीर्ण कर रहे हैं, मैं क्या वह दर्शन करूँगी ? ॥२०९॥ वे सब कुंज, अनुपम रासस्थल एवं रतिरंग प्रणयिणी गिरिद्रोणी शोभित है, हरि हरि ! यदि कुत्रापि श्रीराधा का दर्शन न हो, हाय ! हे प्राणेश्वरि ! तब मेरा हृदय कब शतधा विदीर्ण होगा ? ॥२१०॥ अहो, इस कुंज में उन मोहन तनु की नवरतिकला अनुष्ठित हुई

**इति स्मारं स्मारं तव चरितपीयूषलहरीं,**
**कदा स्यां श्रीराधे चकित इह वृन्दावन भुवि।।२११।।**
**श्रीमद् बिम्बाधरे ते स्फुरति नवसुधामाधुरी सिन्धुकोटि,**
**र्नेत्रान्तस्ते विकीर्णाद्भुतकुसुमधनुश्चण्डसत्काण्डकोटिः।**
**श्रीवक्षोजे तवातिप्रमदरसकलासारसर्वस्वकोटिः,**
**श्रीराधे त्वत्पादाब्जात् स्रवति निरवधिप्रेमपीयूषकोटिः।।२१२।।**

---

अहो ! आश्चर्य्ये, इहैवकुञ्जे मोहनतनोः मोहनातनु र्यस्याः तस्याः, नवरतिकल अभूत् नवरतिकौशल बभूव, अत्र सा रसनिधिः दयित सहिता अनृत्यत् अस्मिन्नेव कुञ्जे प्रियेन श्रीकृष्णेन सह नृत्यं अकरोत्, हे श्रीराधे ! एवम्भूतां तव चरितपीयूष लहरीं स्मारं स्मारं पुनः पुनः स्मरणं कृत्वा, इह वृन्दावनभुवि अहं कदा चकितः चमत्कृतः स्याम्॥२११॥ शिखरिणीवृत्तम्॥

हे श्रीराधे ! ते-तव, श्रीमद्बिम्बाधरे सुन्दरे बिम्बरूपः अधरः तस्मिन्, नवसुधामाधुरीसिन्धु कोटिः स्फुरति, ते नेत्राम्भः नेत्रप्रान्त भागात्, अद्भुत कुसुम धनुश्चण्ड सत्काण्ड कोटिः विकीर्णाः अप्राकृतकुसुमधनुषः कन्दर्पस्य उग्रसत् व्यापाराणां कोटिः विक्षिप्ताः, तव श्रीवक्षोजे अतिप्रमदरसकलासारसर्वस्य कोटिः स्फुरति। वक्षोजे स्तनयोः अतिप्रमदरसस्य या कलाचातुर्य्यं तस्य सार सर्वस्व कोटिः स्फुरति प्रकाशमाना तिष्ठति, तत् पादाब्जात् पदकमलात्, प्रेमपीयूष कोटिः निरवधिस्रवति निःसरति॥२१२॥ स्रग्धरावृत्तम्॥

---

थी, यहाँ रसनिधि प्राणकान्त के साथ नृत्य किया था। हे श्रीराधे ! एवम्भूत आपकी चरित पीयूष लहरी का पुनः-पुनः स्मरण कर इस वृन्दावन भूमि में कब मैं चमत्कृत होऊँगी ?॥२११॥ हे श्रीराधे ! आपके श्रीमद्बिम्बाधर में नवसुधामाधुरी कोटि सिन्धु स्फुरित हो रहे हैं, नेत्रप्रान्त भाग से अद्भुत पुष्पधनु की प्रचण्डसत्काण्डकोटि विकीर्ण हो रही है, श्रीवक्षोज में अति प्रमद रसकला की सारसर्वस्व कोटि शोभित है एवं श्रीचरण-कमल से प्रेमसुधा की कोटि-कोटि धारा निरवधि निःसृत हो रही है॥२१२॥

**सान्द्रानन्दोन्मदरसघनप्रेमपीयूषमूर्त्तेः,**
**श्रीराधाया अथ मधुपतेः सुप्तयोः कुञ्जतल्पे।**
**कुर्वाणाहं मृदु मृदु पदाम्भोजसंवाहनानि,**
**शय्यान्ते किं किमपि पतिता प्राप्ततन्द्राभवेयम्॥२१३॥**
**राधापदारविन्दोच्छलितनवरसप्रेमपीयूषपुञ्जे,**
**कालिन्दीकूलकुञ्जे हृदि कलितमहोदारमाधुर्य्यभावः।**

---

सान्द्रानन्दोन्मद रसधन प्रेमपीयूषमूर्त्तेः निविड़ो य आनन्दः तेनोन्मदः यो रसधनः रसस्य मेघः तस्मात् यत् प्रेमामृतं तदेव मूर्त्तिर्यस्याः तस्याः, श्रीराधायाः अथमधुपतेः श्रीगोविन्दस्य, द्वयोः, कुञ्जतल्पे सुप्तयोः कुञ्जेयत् विहारशय्या तस्मिन् निद्रां प्राप्तयोः, किमपि मृदु मृदु पदाम्भोजसम्बाहनानि कुर्वाणा अनिर्वचनीय कोमलादपि कोमलं पदकमलस्य सेवनं कुर्वाणा सती, अहं प्राप्ततन्द्रा शय्यान्ते पतिता किं भवेयम्॥२१३॥ मन्दाक्रान्तावृत्तम्॥

राधापदारविन्दोच्छलितनवरसप्रेमपीयूषपुञ्जे कालिन्दीकूल कुञ्जे–राधाचरणकमलाभ्यामुच्छलितं यन्नवरसप्रेमामृतञ्च तस्य पुञ्जो यत्र तस्मिन् श्रीयमुनातीरवर्त्ति कुञ्जे, हृदिकलितमहोदार माधुर्य्यभावः हृदये गृहीतो महोदारमाधुर्य्यस्य भावो येन स अहं, तां गरीयोगम्भीरैकानुरागां गरीयसि श्रीकृष्णे गम्भीरैकानुरागो यस्याः तां, श्रीवृन्दारण्य वीथी ललितरति कलानागरीं श्रीवृन्दावन वीथीस्थां

---

निविड़ आनन्दोन्मदरसघन प्रेमपीयूषमूर्त्ति श्रीराधा–मधुपति श्रीकृष्ण कुञ्ज तल्प में निद्रित होने से उनके पदकमलों का मृदु–मृदु सम्बाहन करते–करते मैं तन्द्राग्रस्त होकर क्या शय्यान्त में निपतिता होऊँगी ? ॥२१३॥ जहाँ श्रीराधाचरण–कमल से उच्छलित नवरस प्रेमपीयूषपुंज विद्यमान है, उस कालिन्दीकूलकुंज में कब मैं हृदय में महोदार माधुर्य्यभाव ग्रहण कर उस गरीयान् गम्भीरैकानुरागवती श्रीवृन्दावनवीथीस्थिता ललित रतिकला

**श्रीवृन्दारण्यवीथीललितरतिकलानागरीं तां गरीयो,**
**गंभीरैकानुरागां मनसि परिचरन् विस्मृतान्यः कदा स्याम्।।२१४।।**
**अदृष्ट्वा राधाङ्केनिमिषमपि तं नागरमणिं,**
**तया वा खेलन्तं ललितललितानङ्गकलया।**
**कदाहं दुःखाब्धौ सपदि पतितमूर्च्छितवती,**
**न तामाश्वास्यार्तां सुचिरमनुशोचेनिजदशाम्।।२१५।।**
**भूयोभूयः कमलनयने किं मुधावार्य्यतेऽसौ,**
**वाङ्मात्रेऽपि त्वदनुगमनं न त्यजत्येव धूर्त्तः।**

---

ललितकलायुक्ता या नागरीं तां मनसि परिचरन् विस्मृतान्यः कदा स्याम्। विस्मृतमन्यद् येन सः एतादृशः कदा भविष्यामीति प्रार्थना।।२१४।। स्रग्धरावृत्तम्।।

तथा वा साहित्ये वाशब्दः, सह ललितललितानङ्गकलषा खेलन्तं तं नागरमणिं श्रीकृष्णं, राधाङ्के–श्रीराधाक्रोड़े निमिषमपि अदृष्ट्वा मूर्च्छितवती अहं दुःखाब्धौ सपदि तत्क्षणात्, पतितासती तां आर्त्तां श्रीप्रियां श्रीकृष्णवियोगेन व्याकुलां, न आश्वास्य सुचिरं निजदशां निजपतनदशां कदा अनुशोचे।।२१५।। शिखरिणीवृत्तम्।।

हे कमलनयने ! हे श्रीराधे ! असौ भूयोभूयः किं मुधाव्यर्थं, वार्य्यते ? यतो वाङ्मात्रेणापि धूर्त्तः श्रीकृष्णः, त्वदनुगमनं नैवत्यजति

---

समन्विता नागरी की मानसिकी परिचर्य्या करते-करते कब मैं आत्मविस्मृति हो जाऊँगी।।२१४।।

श्रीराधा के साथ ललित कन्दर्प क्रीड़ा कौशल प्रकाश के समय नागरमणि श्रीकृष्ण को श्रीराधा के अंग में निमेषमात्र न देखकर मूर्च्छितवती मैं दुःखसागर में पतित होकर प्रिय वियोगार्त्ता को आश्वस्त करने का अवकाश प्राप्त कर उस अवस्था के लिए मेरी कब चिर अनुशोचना होगी ? ।।२१५।।

**किञ्चिद्राधे कलकुचतटी प्रान्तमस्यम्रदीय,**
**श्चक्षुर्द्वारा तमनुपतितां चूर्णतामेतु चेतः।।२१६।।**
**किंवा नस्तैः सुशास्त्रैः किमथ तदुदितै वर्त्मभिःसद्गृहीतै,**
**र्यत्रास्ति प्रेममूर्त्तेर्नहि महिमसुधा नापि भावस्तदीयः।**
**किंवा वैकुण्ठलक्ष्म्याप्यहह परमया यत्र मे नास्ति राधा,**
**किन्त्वाशाप्यस्तु वृन्दावनभुवि मधुरा कोटिजन्मान्तरेऽपि।।२१७।।**
**श्यामश्यामेत्यनुपमरसापूर्णवर्णैर्जपन्ती,**
**स्थित्वा स्थित्वा मधुरमधुरोत्तारमुच्चारयन्ती।**

---

त्वत् पृष्ठलग्न एव तिष्ठति यस्मादसौ धूर्त्तः, तस्मात् किञ्चित्कुरु यतः अस्यधूर्त्तस्य म्रदीयः मृदुभावापन्नः चेतः तं कुचतटी प्रान्तं चक्षुषो द्वारा अनुपतितं सन्चूर्णतां एतु यातु।।२१६।। मन्दाक्रान्तावृत्तम्।।

नः अस्माकं, तैः सुशास्त्रै र्वा किं किं प्रयोजनं ? अथ तदुचितैः तत् शास्त्रविहितैः सद्गृहीतैः सद्भिः नारदप्रह्लादादिभिः गृहीतैः, वर्त्मभिः वा किम्, यत्रप्रेममूर्त्तेः श्रीराधायाः, महिमसुधा हि नास्ति तदीयः भावः अपि नास्ति। वा अहह अत्याश्चर्य्ये, परमया वैकुण्ठ लक्ष्म्यापि किं श्रेष्ठ्या वैकुण्ठ स्थितत्या श्रिया किं प्रयोजनं, यत्र मे--मम राधा नास्ति, किन्तु कोटि जन्मान्तरेऽपि वृन्दावनभुवि मधुरा आशापि अस्तु।।२१७।। स्रग्धरावृत्तम्।।

---

हे कमलनयने ! हे श्रीराधे ! बारम्बार निवारण करना वृथा है, कारण धूर्त्त, कथा से आपका अनुगमन करना नहीं छोड़ेगा, अतएव ऐसा कुछ करो, जिससे उसके मृदुल चित्त चक्षु के द्वारा आपके वक्षोज प्रान्त में गिरकर चूर्ण हो जाय।।२१६।। जहाँ प्रेममूर्त्ति श्रीराधा की महिमासुधा का तदीयभाव वर्त्तमान नहीं, उस प्रकार सुशास्त्र समूह अथवा उस शास्त्रविहित साधुजन गृहीत वर्त्मसमूह का भी क्या प्रयोजन है ? अहो ! जहाँ श्रीराधा नहीं हैं, उस परमा वैकुण्ठ प्रीति से भी क्या प्रयोजन है ? किन्तु कोटि जन्मान्तर में भी श्रीवृन्दावन भूमि के प्रति मेरी मधुरा अभिलाषा हो।।२१७।।

**मुक्तास्थूलान्नयनगलितानश्रुविदून् बहन्ती,**
**हृष्यद्रोमा प्रतिपद चमत्कुर्वती पातु राधा॥२१८॥**
**तादृङ्मूर्त्ति र्ब्रजपतिसुतः पादयो र्मे पतित्वा,**
**दन्ताग्रेणाथ धृततृणकं काकुवादान् ब्रवीति।**
**नित्यं चानुब्रजति कुरुते सङ्गमायोद्यमं,**
**केत्युद्वेगं मे प्रणयिनि किमावेदयेयं नु राधे॥२१९॥**

---

श्याम श्यामेति अनुपम रसापूर्णवर्णैः जपन्ती हे श्याम ! हे श्याम ! इति बारम्बारं उपमारहितो यो रसः तेन आ समन्तात् ये पूर्णाः वर्णाः तैः सह जपन्ती, स्थित्वा स्थित्वा मधुरमधुरोत्तार मुच्चारयन्ती स्थित्वा स्थित्वा मधुरादपि मधुरं उत्तारं सुखरं उच्चारयन्ती, च नयनगलितान् मुक्तास्थूलान् अश्रुबिन्दून बहन्ती हृष्यद्रोमा हर्षेण रोमाञ्चत् प्राप्ता, प्रतिपदचमत्कुर्वती प्रतिपदं चमत्कारमेव करोति या सा, राधा नः अस्मान् पातु रक्षतु॥२१८॥ मन्दाक्रान्तावृत्तम्॥

हे प्रणयिणि ! हे प्रीतियुक्ते ! हे श्रीराधे ! त्वां रुष्टां ज्ञात्वा, तादृङ्मूर्त्ति र्ब्रजपतिसुतः श्रीकृष्णः, मे पादयोः पतित्वा अथ दन्ताग्रेण

---

जो अनुपम रसपूर्ण वर्ण के साथ बारम्बार 'श्याम-श्याम' जप करती रहती हैं, रुक-रुककर मधुर से भी मधुर स्वर का उच्चारण कर रही हैं, जिनके नयनों से स्थूलमुक्ता की मोती अश्रुबिन्दु निर्गत हो रही है, जो आनन्द से पुलकित हैं एवं प्रतिपद में ही चमत्कारवती हैं, वे श्रीराधा हमारी रक्षा करें॥२१८॥ हे प्रणयिणी ! हे श्रीराधे ! आपको रुष्टा जानकर मोहनमूर्त्ति ब्रजेन्द्रनन्दन श्रीकृष्ण मेरे चरणों में गिरकर एवं दशनों में तृण धारण कर विनती करते-करते पश्चात् गमन करते रहेंगे, उद्देश्य है कि मैं मिलन सम्पादन हेतु उद्यम करूँ, किन्तु उस आचरण से दुःखी होकर मैं उद्वेग का निवेदन आपसे करूँगी क्या ? ॥२१९॥

**चलल्लीलागत्या क्वचिदनुचलद्धंसमिथुनं,**
**क्वचिद् केकिन्यग्रे कृतनटनचन्द्रक्यनुकृति।**
**लताश्लिष्टं शाखिप्रवरमनुकुर्वत् क्वचिदहो,**
**विदग्धद्वन्द्वं तद्रमत इह वृन्दावन भुवि॥२२०॥**
**व्याकोशेन्दीवरमथ रुचा हारिहेमारविन्दं,**
**कालिन्दीयं सुरभिमनिलं शीतलं सेवमानम्।**
**सान्द्रानन्दं नवनवरसं प्रोल्लसत् केलिवृन्दं,**
**ज्योतिर्द्वन्द्वं मधुरमधुरं प्रेमकन्दं चकास्ति॥२२१॥**

---

तृणकं धृत्वा, काकुवादान् सदैन्यप्रार्थनावाक्यानि ब्रवीति च नित्यं अनुव्रजति किमर्थमेव ? सङ्गमाय उद्यमं कुरुते मे-मम, उद्वेगं तुभ्यं किं नु आवेदये॥२१९॥ मन्दाक्रान्तावृत्तम्॥

अहो ! आश्चर्य्य ! इह वृन्दावनभुवि क्वचिद् चलल्लीला-यत्या अनुचलद्धंस मिथुनं कस्मिंश्चित्स्थाने चलद् यथा हंसस्यमिथुनं तथा लीलागत्या अनुचलत् क्वचिद् केकिन्यग्रे कृतनटनचन्द्रक्यनुकृति क्वचिद्स्थाने मयूर्य्यग्रे मयूरस्य यत् नटनं तदनुकृतिः कृतं येन तत्, क्वचिल्लताश्लिष्टं शाखिप्रवरमनुकुर्वत् क्वचिद् तरुराजः यथा लतालिङ्गितोभवति तथा स्वयमनुकुर्वत् यत् तत् विदग्धद्वन्द्वंरमत॥२२०॥ शिखरिणीवृत्तम्॥

व्याकोशेन्दीवरमथ हेमारविन्दं रुचा हारि विकसितस्य नीलकमलस्य अथ सुवर्णाम्बुजस्य याः रुचोभासः तासां स्वकान्त्या हर्त्तुम् शीलम्, कालिन्दीयं सुरभिं शीतलं अनिलं सेव्यमानम्

---

अहो ! वे विदग्धयुगल इस श्रीवृन्दावन में कहीं पर लीलागति के द्वारा गमनशील हंसमिथुन का अनुसरण कर किसी स्थान पर मयूरी के सामने मयूर की नृत्यभंगी का अनुकरण कर कहीं पर लताश्लिष्ट तरुवर का अनुकरण कर क्रीड़ा कर रहे हैं॥२२०॥ विकसित नीलकमल एवं स्वर्णकमल की कान्तिहरणकारी श्रीयमुना की सुरभि शीतल पवनसेवी सान्द्रानन्द, नव-नव रसविशिष्ट,

**कदा मधुरसारिकाः स्वरसपद्यमध्यापयत्,**
**प्रदाय करतालिकाः क्वचन नर्त्तयत् केकिनम्।**
**क्वचिद् कनकवल्लरी वृततमाललीलाधनं,**
**विदग्धमिथुनं तदद्भुतमुदेति वृन्दावने।।२२२।।**
**पत्रालिं ललितां कपोल फलके नेत्राम्बुजेकज्ज्वलं,**
**रङ्गं बिम्बफलाधरे च कुचयोः काश्मीरजा लेपनम्।**
**श्रीराधे नवसङ्गमाय तरले पदाङ्गुलीपङ्क्तिषु,**
**न्यस्यन्ती प्रणयादलक्तकरसं पूर्णा कदा स्यामहम्।।२२३।।**

---

श्रीयमुनासम्बन्धि सुगन्धि शीतलं पवनं सेव्यमानं, सान्द्रानन्दं निविड़ानन्दरूपम्, नवनवरसं नित्याभिनवः रसः स्वरूपम्, प्रोल्लसत् केलिवृन्दं शोभमानोकेलीनां समूहोयत्र, मधुरं मधुरं मधुरादपिमधुरं, प्रेमकन्दं प्रेम्नः उत्पत्तिस्थानम्, ज्योतिर्द्वन्द्वं चकास्ति।।२२१।। मन्दाक्रान्तावृत्तम्।।

कदा मधुर सारिकाः स्वरसपद्यमध्याययत् कदा मधुराः मधुरस्वराः सारिकाः स्वकीय रसयुक्तांपद्यं श्लोकमध्या पयत्, क्वचन करतालिकाः प्रदाय केकिनम् नर्त्तयत् केकिनं मयूरंनर्त्तयत्, क्वचिद् कनकवल्लरीवृततमाललीलाधनं स्वर्णलतावृततमाल वृक्षस्य या लीला तदेव धनं यस्य, तदद्भुतं विदग्धमिथुनं विदग्धयुगलं, वृन्दावने उदेति प्रकाशमानं तिष्ठति।।२२२।। पृथ्वीवृत्तम्।।

हे श्रीराधे ! अहं नव कपोलफलके ललितां पत्रालीं नेत्राम्बुजे कज्जलं बिम्बफलाधरे रङ्गं बिम्बफलवत् रक्ताधरे ताम्बूलरङ्ग,

---

उल्लसित केलिवृन्दयुक्त, मधुरादपि मधुर प्रेमकन्द ज्योतिर्द्वन्द्व शोभित हो रहे हैं।।२२१।। कभी मधुरस्वरा सारिकागण को स्वकीय रसमयी गाथा सिखाते हैं, कभी करतालि देकर मयूर को नचा रहे हैं, कहीं पर कनकलतावृत तमाल के लीलारत्न की भाँति अद्‌भुत विदग्धयुगल श्रीवृन्दावन में शोभित हैं।।२२२।। हे श्रीराधे ! मैं आपके कपोल फलक में मनोहर पत्राली की रचना कर एवं नयनकमल

**श्रीगोवर्द्धन एक एवभवता पाणौ प्रयत्नाद्धृतः,**
**श्रीराधातनुहेमशैलयुगले दृष्टेऽपि ते स्याद्भयम्।**
**तद् गोपेन्द्रकुमार मा कुरु वृथा सर्वं परीहासतः,**
**कर्ह्येवं वृषभानुनन्दिनि तव प्रेयांसमाभाषये।।२२४।।**
**अनङ्गजयमङ्गलध्वनितकिङ्किणी डिण्डिमः,**
**स्तनादि वरताड़नैर्नखरदन्तघातैर्युतः।**

---

कुचयो काश्मीरजालेपनं कुङ्कुमपङ्कानुलेपनं, न्यस्यन्ती स्थापयन्ती, च-पुनः, हे नवसङ्गमाय तरले नवसङ्गमार्थं चञ्चले प्रणयात् बहुप्रीत्या, तव पादाङ्गली पङ्क्तिषु अलक्तकरसं न्यस्यन्ती कदापूर्ण पूर्णमनोरथा, स्याम्।।२२३।। शार्दूलविक्रीड़ितंवृत्तम्।।

हे गोपेन्द्रकुमार ! हे नन्दनन्दन ! हे श्रीकृष्ण ! भवता पाणौ एक एव श्रीगोवर्द्धनः प्रयत्नात् धृतः एक एव नतु द्वौ सोऽपि हस्ते नतु हृदि तदपि प्रयत्नात् न सहजतयेति भावः, श्रीराधातनु हेमशैलयुगले दृष्टेऽपि ते भयं स्यात् श्रीराधातनौ हेम्नः शैलयुगलं धारयति तद् दृष्टे सति तवभयं स्यात् शक्तोन भवेरिति भावः तत् तस्मात्, परीहासतः वृथा गर्वं मा कुरु, हे वृषभानुनन्दिनि, हे श्रीराधे, अहं एवं प्रकारेण तव प्रेयांसं कर्हि आभाषये तव श्रियमेवं कदा कथये।।२२४।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

में मनोहर पत्राली की रचना कर, नयनकमल में कज्जल, बिम्बाफलाधर में ताम्बुलराग, वक्षोजयुगल में कुंकुमपंकानुलेपन कर एवं हे नवसंगमार्थ तरले ! अतिशय प्रीति से आपकी पदांगुली में अलक्तकरस रंजित कर कब मैं पूर्ण मनोरथ हो जाऊँगी।।२२३।।

गोपेन्द्रकुमार ! आपने एकबार मात्र ही श्रीगोवर्द्धन शैल का धारण अति यत्नपूर्वक हाथ से किया था, किन्तु श्रीराधा के वक्षःस्थल में कनकशैल युगल को देखकर शंकित हो रहे हो, अतएव परिहास के च्छल से वृथा गर्व न करो, हे वृषभानुनन्दिनी ! मैं इस प्रकार निवेदन कब आपके प्रियतम से करूँगी ? ।।२२४।।

**अहो चतुर नागरी नवकिशोरयोर्मञ्जुले,**
**निकुञ्ज निलयाजिरे रतिरणोत्सवोजृम्भते।।२२५।।**
**यूनोर्वीक्ष्य दरत्रपानटकला मदीक्षयन्ती दृशौ,**
**वृण्वाना चकितेन सञ्चितमहारत्नस्तमं चापुचरः।**
**सा काचिद् वृषभानु वेश्मनि सखीमालासु वालावली,**
**मौलिः खेलति विश्वमोहनमहासारूप्यमाचिन्वती।।२२६।।**

---

अहो ! आश्चर्य्ये ! मञ्जुले निकुञ्जनिलयाजिरे सुन्दरो यो निकुञ्जालयः तस्याङ्गने, चतुरनागरी नवकिशोरयोः चतुरा या नागरी अथ नवकिशोरश्च तयोः श्रीराधाकृष्णयोः, अनङ्गजय मङ्गल ध्वनित किङ्कणी डिण्डिमः अनङ्गस्य यो जयः तदेव मङ्गलं ध्वनिता या किङ्किणी तत् डिण्डिमः शब्दभेद यत्र सः, स्तनादि वरताड़नैः नखरदन्तघातैर्युतः शृङ्गारक्रीड़ाविलासैः युतः, रतिरणोत्सवः जृम्भते प्रकाशते।।२२५।। पृथ्वीवृत्तम्।।

काचित् अनिर्वचनीया, सा वालावलीमौलिः, वालानां पङ्क्तिः तस्याः शिरोरूपा यूनोर्दरत्रपा नटकलांवीक्ष्य युवतिश्च युवा च तयोः कयोश्चित् इषल्लज्जा एव नटकला तां दृष्ट्वा, दृशोर्मादीक्षयन्ती नेत्रयोः आसमन्ताद् दीक्षारम्भं कारयन्ती, चकितेन चमत्कृतहृदा, सञ्चितमहारत्नस्तनं चापि उरः वृण्वाना आवृतंकुर्वाणा, च विश्वमोहन महासारूप्यमाचिन्वती विश्वमोहनस्य यत् महासारूप्यं तत् आसमन्तात् सञ्चयंकुर्वती, वृषभानुवेश्मनि वृषभानुभवने, सखीमालासु खेलति सखीगण मध्ये खेलति।।२२६।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

अहो ! मंजुल निकुंज गृहांगणे विदग्ध नागरी नवकिशोर के कन्दर्प जयमंगल ध्वनित किंकिणी शब्द, वक्षोजादिका वरताड़न, नखरदन्ताघातयुक्त रतिरणोत्सव प्रकाशित हो रहा है।।२२५।।

अनिर्वचनीया बालागणों के शिरोभूषणरत्न, युवक-युवतियों की ईषत् लज्जारूप नटकला को प्रकट कर नयनद्वय को

**ज्योतिः पुञ्जद्वयमिदमहोमण्डलाकारमस्या,**
**वक्षस्युन्मादयदि हृदयं किं फलत्यन्यदग्रे।**
**भ्रूकोदण्डं नकृतघटनं सत् कटाक्षौघवाणैः,**
**प्राणान् हन्यात् किमु परमतो भाविभूयो न जाने।।२२७।।**
**भोः श्रीदामन् सुवलवृषभस्तोककृष्णार्ज्जुनाद्याः,**
**किं वो दृष्टं मम नु चकिता दृग्गता नैव कुञ्जे।**

---

एतद् दृष्ट्वा विमुग्धः नन्दात्मजः काचनसखीं प्रतिवदति, अहो ! आश्चर्य्ये ! अस्याः श्रीराधायाः वक्षसि इदं मण्डलाकारं वर्त्तुलाकारं, ज्योतिपुञ्जद्वयं नवोद्भिन्नरक्तकमलाभं स्तनद्वयं, हृदयं उन्मादयति, अग्रे अन्यत् किं फलति, उन्मादादपि अधिकं किं फलतीति द्रष्टव्यम्। सत् कटाक्षौघवाणैः सत्कटाक्षाणां प्रवाह एव तीक्ष्णशराः तैः सह, न कृतघटनं भ्रू कोदण्ड न संयोगं भ्रूधनुः प्रति, प्राणान् हन्यात्, अतः परं भूयः संयोगे सति किमु भावि भविष्यतीति न जाने।।२२७।। मन्दाक्रान्तावृत्तम्।।

भोः श्रीदामन् सुवल वृषभ स्तोक कृष्णार्ज्जुनाद्याः– हे श्रीदामन् ! हे सुवल ! हे वृषभ ! हे स्तोककृष्ण ! हे अर्ज्जुनाद्याः

---

सर्वतोभाव से दीक्षित कराकर चमत्कृत चित्त से महारत्नरूप वक्षोजयुगल को आवृत कर एवं विश्वविमोहन का महासारूप्य का संचय कर वृषभानु भवन से सखीगण के मध्य में क्रीड़ा परायण हैं।।२२६।। आहा, इनके वक्षःस्थल में गोलाकार ज्योतिःपुंजद्वय ही मेरे हृदय को उन्मत्त कर रहा है, सम्प्रति इसके अग्रे एतदपेक्षा भी अधिक फल क्या हो सकता है, देखना चाहिए ? अहो ! सत्कटाक्ष प्रवाहरूप तीक्ष्णशर समूह भ्रूधनु के साथ संयुक्त न होकर भी प्राणनाश कर रहे हैं। अतःपर बारम्बार संयोग होने से क्या होगा मैं नहीं जानता हूँ।।२२७।।

**काचिद् देवी सकल भुवनाप्लावि लावण्यपुरा,**
**दूरादेवाखिलमहरत प्रेयसो वस्तुसख्युः।।२२८।।**
**गता दूरे गावो दिनमपि तुरीयांशमभजद्,**
**वयं यातुं क्षान्तास्तव च जननी वर्त्मनयना।**
**अकस्मात्तुष्णीके सजलनयने दीनवदने,**
**लुठत्यस्यां भूमौ त्वयि नहि वयं प्राणिनिषदः।।२२९।।**

---

वः युष्माभिः, किं नु–वितर्के, दृष्टं, मम चकितादृक् कुञ्जेनैवगता, परन्तु दृष्टम् किं दृष्टं तदाह, काचित् अनिर्वचनीया, सकलभुवना–प्लाविलावण्यपुरा देवी सकलं भुवनं स्वलावण्य प्रवाहेन आप्लावयति या सा देवी, दूरादेव नतु सन्निहिता, प्रेयसः सख्युः अखिलंवस्तु अहरत्॥२२८॥ मन्दाक्रान्तावृत्तम्॥

गावः दूरेगताः सुवलादयो यदूचुस्तदाह अस्मदग्रे चरन्त्यो गावः दूरे गताः, दिनमपि तुरीयांशमभजत् दिवायाः चतुर्थ प्रहर आगतः, वयं यातुं क्षान्ताः भवाम, च पुनः तव जननी वर्त्मनयना श्रीमती यशोदा वर्त्मनयना तव आगमनवर्त्मनि निहित नेत्रा, अकस्मात् सात्वयि अस्यां भूमौ तूष्णीके वाक्यरहिते सति, सजल नयने अश्रुपूर्ण नयनेसति दीनवदनेमलिनमुखेसति, लुठति, वयं प्राणिनिषवः नहि वयं प्राणधारणं न इच्छामः॥२२९॥ शिखरिणीवृत्तम्॥

---

हे श्रीदाम, सुबल, वृषभ, स्तोककृष्ण, अर्जुनादि सखावृन्द! तुम सभी ने क्या देखा होगा ? मेरी चकिता दृष्टि कुंज में प्रविष्ट न होने पर भी मैंने क्या देखा वह कहती हूँ सुनो, निखिलभुवन–प्लाविलावण्यमयी एक देवी दूर से ही प्रियसखा की अखिल वस्तु का अपहरण कर रही है॥२२८॥ गो समूह अति दूर में चली गयी हैं, दिवस भी अवसान प्राय है, हम सभी गो समूह को लेकर गृह को जाने के लिए प्रस्तुत हो गये हैं, तुम्हारी वर्त्मनयना जननी अकस्मात् इस भूमि में आकर निर्वाक् सजल नयन, दीनवदन से लुण्ठन कर रही हैं, हम सभी प्राण धारण की इच्छा भी नहीं करते हैं॥२२९॥

**नासाग्रे नवमौक्तिकं सुरुचिरं स्वर्णोज्ज्वलं विभ्रती,**
**नानाभङ्गीरनङ्गरङ्गविलसल्लीलातरङ्गावली।**
**राधे त्वं प्रविलोभय ब्रजमणिं रत्नच्छटा मञ्जरी,**
**चित्रोदञ्चित कञ्चु कस्थगितयोर्वक्षोजयोः शोभया॥२३०॥**
**अप्रेक्षेकृतनिश्चयापि सुचिरं वीक्षेत दृक्कोणतो,**
**मौने दार्ढ्यमुपाश्रितापि निगदेत्तामेव याहीत्यहो।**

---

हे राधे ! नासाग्रे सुरुचिरं स्वर्णोज्वलं नवमौक्तिकं विभ्रती नासाग्रे सुन्दरं सुवर्णेन उज्ज्वलः यन्नवीनंमौक्तिकं तद्धारयन्ती, नानाभङ्गिरनङ्गरङ्ग विलसल्लीलातरङ्गावलिः, नानाभङ्गिमा विशिष्टैः अनङ्गस्य यद्रङ्गं तद्विलसत् या लीलां तत्तरङ्गानाम् आवलिःपङ्क्तिर्यया सा, त्वं रत्नच्छटामञ्जरी चित्रोदञ्चित कञ्चुक स्थगितयोः रत्नानां या च्छटा सा एव मञ्जरी तत् सहितं अर्द्धभागं चित्रयुक्तं यत् कञ्चुकं तेन गुप्तयोः वक्षोजयोः स्तनयोः, शोभया ब्रजमणिं ब्रजरत्नस्वरूपं श्रीकृष्णं, प्रविलोभय सम्यक्प्रकारेण लोभयस्व॥२३०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अप्रेक्षे कृतनिश्चयापि सुचिरं दृक्कोणतः वीक्षेत अहं कदापि तद्दर्शनं न करिष्यामीति अदर्शने कृतनिश्चयापि सुचिरं दीर्घकालं नयनप्रान्तभागेन पश्चेत्, मौने दार्ढ्यमुपाश्रितापि अनेनसाकं सम्भाषणं न कर्त्तव्यमिति दृढ़माश्रितापि, अहो, आश्चर्य्ये, तामेव-याहि, यस्या, कुञ्जेस्थितस्त्वम् तत्रगच्छ, इति निगदेत् एतत्कथन

---

हे श्रीराधे ! आप नासाग्र में सुरुचिर स्वर्णोज्ज्वल नवमौक्तिकधारिणी हैं, नानाभंगि विशिष्ट अनंगरंग लीलातरंगावली विलासिनी हैं, आप रत्नच्छटा मंजरी समन्वित अर्द्धभाग चित्रयुक्त कंचुक द्वारा आवृत वक्षोज युगल की शोभा से ब्रजमणि श्रीकृष्ण को सम्यक् प्रकार से प्रलुब्ध करो॥२३०॥ अदर्शन में कृतनिश्चया होकर भी बहुक्षण से नयनकोण से दर्शन करती रहती हैं, मौन में

**अस्पर्शे सुधृताशयापि करयो र्धृत्वा वहिर्यापये,**
**द्राधाया इति मान दुःस्थितिमहं प्रेक्षे हसन्ती कदा।।२३१।।**
**रसागाधे राधाहृदि सरसि हंसः करतले,**
**लसद्वंशश्रोतस्यमृतगुणसङ्गः प्रतिमदम्।**
**चलत् पिच्छोत्तंसः सुरचितवतंसः प्रमदया,**
**स्फुरद् गुञ्जागुच्छः सहि रसिकमौलिर्मिलतु माम्।।२३२।।**

---

ब्याजेनैव भाषेत्, अस्पर्शे सुधृताशयापि करयो धृत्वा वहिर्यापयेत् एतस्यस्पर्शः न कर्त्तव्य इति धृताशयापि हस्तयो धृत्वा वहिर्निःसारयेत्। अहं हसन्ती हास्यं कुर्वतीसति, राधया इति मानदुःस्थितिम् मानस्य अपह्नुतिं, कदा प्रेक्षे॥२३१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यः रसागाधे राधाहृदि सरसिहंसः अगाधरसपूर्णे राधाहृदिसरोवरे हंसरूपः करतले लसत् स्रोतसि प्रतिपदं अमृतगुणसङ्गः वंशः करतले शोभमानः श्रवणे प्रतिपदं अमृतस्य यद्गुणाः तत्सङ्गः भवति यतः तद्वंशः वंशिकायस्य सः, प्रमदया सुरचितवतंसः प्रियया सुरचितं कर्णभूषणं यस्य सः। स्फुरद्गुञ्जागुच्छः प्रकाशमाना गुञ्जामाला यस्य, सः रसिकमौलिः रसिकानां शिरोमणिः, मां हि निश्चयेन, मिलतु॥२३२॥ शिखरिणीवृत्तम्॥

---

दृढ़ता अवलम्बन करके भी अहो ! उनके निकट जाओ, इस प्रकार वाक्य का प्रयोग कर रही हैं एवं स्पर्श नहीं करूँगी, इस प्रकार दृढ़ संकल्प करके भी श्रीकृष्ण के हस्तद्वय को धारण कर उनको कुंज से बाहर कर रही हैं, मैं हँस-हँसकर श्रीराधा के इस प्रकार मान का अपलाप का दर्शन कब करूँगी॥२३१॥ जो अगाध रसपूर्ण श्रीराधा हृदय सरोवर के हंसस्वरूप हैं, जिनके करतल में अमृतगुणवर्षुक वंशी शोभित है, जिनके मस्तक में चंचल मयूरपिच्छ का मुकुट, प्रिया के द्वारा रचित कर्णभूषण, कण्ठ में गुंजामाला शोभित है, वे रसिकमौलि निश्चय ही मेरे साथ मिलित होंगे॥२३२॥

**अकस्मात् कस्याश्चिन्नववसनमाकर्षति परां,**
**मुरल्याधम्मिल्ले स्पृशति कुरुतेऽन्याकरधृतिम्।**
**पतन्नित्यं राधापदकमलमूले ब्रजपुरे,**
**तदित्थं वीथीषु भ्रमति स महालम्पटमणिः।।२३३।।**
**एकस्या रतिचौर एव चकित चान्यास्तनान्ते करं,**
**कुर्य्यात् कर्षति वेणुनास्य सुदृशो धम्मिल्लमल्ली स्रजम्।**

---

सः महालम्पटमणिः सः स्त्रीलुब्धेषु महारत्नस्वरूपः, ब्रजपुरे अकस्मात् कस्याश्चिद् कस्याश्चिद् गोपिकायाः, नववसनमाकर्षति नववस्त्रं आकर्षति, परं मुरल्या धम्मिल्ले स्पृशति अपरां मुरल्ल्या धम्मिल्ले स्पृशति, अन्याकरधृतिं कुरुते। अन्यस्याः करधारणं करोति, परं नित्यं राधापदकमलमूलेलुण्ठति तत् तस्मिन्, वीथीषु इत्थं एवं प्रकारेण भ्रमति॥२३३॥ शिखरिणीवृत्तम्॥

एकस्याः रतिचौर एव, एकस्याः रतेश्चौर्य्यमेव करोति, च पुनः, चकित अन्या अन्यस्याः, स्तनान्तरे करं धृत्वा अन्यस्याः सुदृशेः सुलोचनायाः, धम्मिल्लमल्लीस्रजं धम्मिल्ले या मल्लिकामाला तां, वेणुना आकर्षति, अन्यस्याः उत्पुलकितां स्पर्शमात्रेण रोमाञ्चितां भुजवल्लीं धत्ते, अन्ययासह सङ्केतयति कुञ्जान्तरे चलनीयमिति सङ्केतेन कथयति, राधायाः पदयोः

---

महालम्पटमणि श्रीकृष्ण ब्रजपुर में अकस्मात् किसी का नववसन आकर्षण कर रहे हैं। मुरली द्वारा किसी की कबरी का स्पर्श करते हैं, किसी का हस्त धारण कर रहे हैं, नित्य श्रीराधाचरणों में लोट लगा रहे हैं, इस रीति से ब्रज के पथ-पथ में भ्रमण कर रहे हैं॥२३३॥ एक रति अपहरण करते-करते चकित होकर अपर के वक्षोज में हस्तार्पण कर, अन्य सुलोचना की कबरीस्थित मल्लिका माला का आकर्षण वेणु से कर रहे हैं, किसी की पुलकिता भुजवल्ली को धारण कर अन्य के साथ कुंजान्तर में प्रविष्ट होने का संकेत

**धत्तेऽन्याभुजवल्लिमुत्पुलकितां सङ्केतयत्यन्यया,**
**राधायाः पदयोर्लुठत्यलममुं जानेमहालम्पटम्।।२३४।।**
**प्रियांसे निक्षिप्तोत्पुलकभुजदण्डः क्वचिदपि,**
**भ्रमन् वृन्दारण्ये मदकलकरीन्द्राद्भुतगतिः।**
**निजां व्यञ्जन्नत्यद्भुत सुरतशिक्षां क्वचिदहो,**
**रहः कुञ्जे गुञ्जाध्वनितमधुपे क्रीड़ति हरिः।।२३५।।**
**दूरे स्पृष्ठादिवार्त्ता न कलयति मनाङ्नारदादीन् स्वभक्तान्,**
**श्रीदामाद्यैः सुहृद्भिर्नमिलति च हरेत् स्नेहवृद्धिं स्वपित्रोः।**

---

अलं निरर्थकम् लुठति। अहं अमं महा लम्पटं जाने॥२३४॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो आश्चर्य्ये ! क्वचिदपि वृन्दारण्ये मदकल-करीन्द्राद्भुतगतिः, मदोन्मत्तः यः करीन्द्रस्तद्वद् अद्भुतागतिर्गमनं यस्य सः, हरिः श्रीकृष्णः, प्रियांसे निक्षिप्तोत्पुलकभुजदण्डः सन् प्रियायाः श्रीराधायाः स्कन्धे उद्दामपुलकयुक्तोभुजदण्डारोपणंकुर्वन्, भ्रमन् च क्वचित् गुञ्जाध्वनितमधुपे रहःकुञ्जे कलध्वनितं मधुपानां यत्र तस्मिन् निभृतकुञ्जे, निजां अत्यद्भुतसुरतशिक्षां व्यञ्जन् प्रकटीकुर्वन् क्रीड़ति॥२३५॥ शिखरिणीवृत्तम्॥

सृष्ट्यादिवार्त्ता दूरे तिष्ठतु नारदादीन् स्वभक्तान् मनागपि न कलयति, ईषदपि न जानाति, श्रीदामाद्यैः सुहृद्भिः नैव मिलति,

---

करते हैं, सुतरां श्रीराधा के पदद्वय में लुण्ठित होना निरर्थक है, मैं उन महालम्पट को जानती हूँ॥२३४॥ अहो ! हरि–श्रीकृष्ण, प्रिया के स्कन्ध में उद्दाम पुलकयुक्त भुजदण्ड का आरोपण कर मदकल करीन्द्र की भाँति अद्भुत गति से श्रीवृन्दावन में भ्रमण कर रहे हैं, कहीं पर मधुपगुञ्जित रहःकुञ्ज में निज अत्यद्भुत कन्दर्पकेलि शिक्षा को प्रकट कर क्रीड़ा कर रहे हैं॥२३५॥ सृष्टादि वार्त्ता का प्रसंग तो क्या है–नारदादि स्वभक्तगण की सुध भी नहीं लेते हैं,

**किन्तु प्रेमैक सीमां मधुरससुधासिन्धुसारैरगाधां,**
**श्रीराधामेव जानन्मधुपतिरनिशं कुञ्जवीथीमुपास्ते।।२३६।।**
**सुस्वादुसुरसतुन्दिलमिन्दीवरसुन्दरं किमपि।**
**अधिवृन्दाटवि नन्दति राधावक्षोजभूषणं ज्योतिः।।२३७।।**
**कान्तिः क्वापिपरोज्ज्वला नवमिलच्छ्रीचन्द्रिकोद्भासिनी,**
**रामाऽत्यद्भुतवर्णकाञ्चितरुचिर्नित्याधिकाङ्गच्छविः।**

---

स्वपित्रोः स्नेहवृद्धिं हरति यशोदानन्दयोः स्नेहवृद्धिं हरति, किन्तु मधुपतिः श्रीकृष्णः, मधुररससुधासिन्धुसारैरगाधां मधुररस एव सुधासिन्धुस्तस्यसारै रत्नैः अगाधां गम्भीरां, प्रेमैकसीमां श्रीराधामेव जानन् अनिशं निरन्तरं कुञ्जवीथीमेव उपास्ते॥२३६॥ स्रग्धरावृत्तम्॥

अधिवृन्दाटवि वृन्दाटवीं अधिकृत्येति, किमपि अनिर्वचनीयं, सुस्वादुसुरसतुन्दिलम् सुरसभरेण अन्यत्र गन्तुमसक्तमितिभावः। इन्दीवरवृन्दसुन्दरं नीलकमलस्य समूहः तद्वत् सुन्दरं, राधावक्षोज भूषणं ज्योतिः नन्दति आनन्दं प्राप्नोति।

पथ्या–प्रथमगणत्रय विरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या॥२३७॥

कापि अनिर्वचनीया, परोज्ज्वलाकान्तिः शृङ्गाररसोज्ज्वला कान्तिर्यस्याः सा, नवमिलच्छ्रीचन्द्रिकोद्भासिनी नवसङ्गमयोः या श्रीः शोभा सा एव चन्द्रिका तामुद्भासयति या सा, अत्यद्भुत-वर्णकाञ्चितरुचिः, अद्भुतां वर्णकं कुङ्कुमं तदञ्चिता शोभितारुचिर्यस्या सा, नित्याधिकाङ्गच्छविः नित्यमधिकैवाङ्गानां-

---

श्रीदामादि सुहृद् वर्ग के साथ भी नहीं मिलते हैं, यहाँ तक कि पिता-माता की स्नेह वृद्धि को भी नहीं चाहते हैं, किन्तु मधुपति श्रीकृष्ण, मधुर रससुधासिन्धुसार द्वारा अगाध प्रेमैकसीमा श्रीराधा को ही जानकर सर्वदा कुंज पथ में ही अवस्थान करते रहते हैं॥२३६॥ श्रीवृन्दावन में अनिर्वचनीय सुस्वादु सुरसतुन्दिल इन्दीवर वृन्दसुन्दर श्रीराधा वक्षोज भूषणज्योति आनन्द प्राप्त हो रहे हैं॥२३७॥

**लज्जानम्रतनुः स्मयेन मधुरा प्रीणातिकेलिच्छटा,**
**सन्मुक्ताफलचारुहार सुरुचिः स्वात्मार्पणेनाच्युतम्।।२३८।।**
**यन्नारदाजेशशुकैरगम्यं वृन्दावने वञ्जुल मञ्जुकुञ्जे।**
**तत् कृष्ण चेतो हरणैकविज्ञमत्रास्ति किञ्चित् परमं रहस्यम्।।२३९।।**
**लक्ष्मीर्यस्य न गोचरी भवति यन्नापुः सखायः प्रभोः,**
**संभाव्योऽपि विरिञ्चि नारदशिव स्वायम्भुवाद्यैर्न यः।**

---

च्छविर्यस्या सा, लज्जानम्रतनुः लज्जया विनम्रा तनुर्यस्याः, स्मयेन मधुरा–गर्वेण मधुरा, केलिच्छटा क्रीड़ायाम् च्छटाशोभा यस्याः, सन्मुक्ताफल चारुहारसुरुचिः सुन्दरमुक्ताफलानां यत् चारुहारस्तेन सुष्ठुकान्ति र्यस्याः सा, रामा राधा, स्वात्मार्पनेन, निजात्मा–समर्पनेन, अच्युतम् श्रीकृष्णं प्रीणाति सन्तुष्टं करोति॥२३८॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अत्र वृन्दावने वञ्जुमञ्जुलकुञ्जे वञ्जुलानां वेतसानां यत् मञ्जुसुन्दरं कुञ्जं तस्मिन्, यन्नारदाजेशशुकैरगम्यं नारदश्च अजश्च ईशश्च शुकश्च तैः यत् अगम्यं अनधिगम्यं, तत् कृष्ण चेतो हरणैक विज्ञं श्रीकृष्णमनोहरणे एकमेव विज्ञं निपुणं यत् तत्, परमं श्रेष्ठं किञ्चित् रहस्यं गूढ़तत्वं अस्ति॥२३९॥ इन्द्रवज्रावृत्तम्॥

---

अनिर्वचनीया परोज्ज्वालाकान्ति नवसंगमशोभा–चन्द्रिकोद्भासिनी, अद्भुतवर्ण कांचितरुचि, नित्याधिकाच्छवि, लज्जानम्रतनु, गर्वमधुरा, केलि विलासिनी, सुन्दरमुक्तामाला की शोभाशालिनी श्रीराधा निज आत्मा समर्पण के द्वारा अच्युत को सन्तुष्ट कर रही हैं।

इस श्रीवृन्दावन में मनोहर वेतस कुंज में नारद, अज, ईश, शुकदेव का भी अनधिगम्य, श्रीकृष्ण मनोहरण हेतु एकमात्र विज्ञ कुछ परम रहस्य विद्यमान है॥२३९॥ जो लक्ष्मी के भी गोचरीभूत नहीं हैं, श्रीकृष्णगण भी जिनको प्राप्त करने में असमर्थ हैं, विरिञ्चि नारद, शिव, स्वायम्भुवादि को भी जो अलभ्य हैं,

**यो वृन्दावन नागरीपशुपति स्त्रीभावलभ्यः कथं,**
**राधामाधवयोर्ममास्तु सरहोदास्याधिकारोत्सवः।।२४०।।**
**उच्छिष्टामृतभुक्तवैवचरितं शृंण्वंस्तवैव स्मरन्,**
**पादाम्भोजरजस्तवैव विचरन् कुञ्जांस्तवैवालयान्।**
**गायन् दिव्यगुणांस्तवैव रसदे पश्यं स्तवैवाकृतिं,**
**श्रीराधेतनुवाङ्मनोभिरमलैः सोऽहं तवैवाश्रितः।।२४१।।**

---

यश्च लक्ष्म्या न गोचरी भवति, यत् प्रभोः सखायः न आपुः, श्रीकृष्णस्य सखायः श्रीदामाद्या न प्रापुः, विरिञ्चि, नारद, शिव, स्वायम्भुवाद्यैः यः सम्भाव्योपि न भवति, कथं हर्षे, सम्भावनार्थे, यो वृन्दावन नागरी पशुपति स्त्रीभावलभ्यः पशुपतिः स्त्रीपशुपः गोपः तस्य स्त्री गोपी तद्भावलभ्यः, स राधामाधवयोः श्रीराधाकृष्णयोः, रहोदास्याधिकारोत्सवः, रहोदास्याधिकारो यः उत्सवः आनन्दमयः व्यापार स्तत्, मम अस्तु॥२४०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे श्रीराधे ! हे रसदे ! सः तवैव उच्छिष्टामृतमुक् तवैव नान्यस्येतिभावः, यदुच्छिष्टं तदेवामृतं तदेव भुङ्क्ते इति सः। अहं तवैव चरितं शृण्वन् तवैव पादाम्भोजरजः स्मरण, तवैव कुञ्जान् आलयान् विचरन्, तवैव दिव्यगुणान् गायन्, तवैव आकृतिं पश्यन् च अमलैः तनु वाङ्मनोभिः तवैव आश्रितोऽस्मि॥२४१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

जो श्रीवृन्दावन नागरी गोपांगनागण के भाव से लभ्य है, उन श्रीराधामाधव के रहः दास्याधिकारोत्सव में अधिकार मेरा हो॥२४०॥ हे श्रीराधे ! हे रसदे ! मैं आपका उच्छिष्टामृतभुक् हूँ। मैं आपकी चरित गाथा का श्रवण करते-करते श्रीचरण-कमल रजः का स्मरण करते-करते कुंजालय में विचरण करते-करते दिव्य गुणावली का गान करते-करते एवं आपकी श्रीमूर्त्ति का दर्शन करते-करते शुद्ध कायवाक्य मन के द्वारा मैं आपके ही आश्रित हूँ॥२४१॥

**क्रीड़न्मीनद्वयाक्ष्याः स्फुरदधरमणीविद्रुमश्रोणिभार,**
**द्वीपायामान्तराल स्मरकलभकटाटोप वक्षोरुहायाः।**
**गम्भीरावर्त्तनाभेर्बहुल हरिमहाप्रेम पीयूषसिन्धोः,**
**श्रीराधायाः पदाम्भोरुह परिचरणे योग्यतामेवमृग्ये।।२४२।।**
**मालाग्रन्थन शिक्षया मृदुमृदु श्रीखण्डानिर्घर्षणा,**
**देशेनाद्भुत मोदकादि विधिभिः कुञ्जान्तसंमार्जनैः।**

---

क्रीड़न्मीनद्वयाक्ष्याः क्रीड़न्मीनद्वयमिव अक्षिणी यस्याः, स्फुरदधर मणिविद्रुम श्रोणिभारद्वीपायामन्तराल स्मर कमल कटाटोपवक्षोरुहायाः प्रकाशमानं अधरं मणिमौक्तिक प्रकाशवर्त्तथा श्रोणिभारः नितम्ब एव द्वीपवत् तस्यान्तराले काम एव कलभः करिशावकः तस्य कुम्भद्वयस्य आड़म्बरवत् वक्षोजयोर्यस्याः, गभीरावर्त्तनाभेः गम्भीरा चासौ आवर्त्तरूपा नाभिर्यस्याः, बहुल हरिमहाप्रेमपीयूषसिन्धोः बहुलो योहरेः श्रीकृष्णस्य महाप्रेमा स एव पीयूषं तस्य सिन्धु स्तस्याः, श्रीराधायाः पदाम्भोरुह परिचरणे अहं योग्यतामेव चिन्वे अन्विस्यामि॥२४२॥ स्रग्धरावृत्तम्॥

वृन्दारण्य रहः स्थलीषु प्रेमार्त्तिभारोद्गमात् विवशा श्रीवृन्दावने निभृत केलिकुञ्जेषु प्रेमार्त्तिभरस्य य उद्गमः तेन विह्वला, अधीश्वरी श्रीराधा, मालाग्रन्थनशिक्षया कुसुम मालायाः ग्रन्थन शिक्षणेन, मृदुमृदु श्रीखण्डनिर्घर्षणादेशेन मृदुमृदु चन्दन घर्षणार्थं आदेशेन, अद्भुत मोदकादि विधिभिः आश्चर्य्यरूप लडडुकादि रचनाभिः, कुञ्जान्त सम्भार्जनैश्च कुञ्जाना प्रान्त पर्यन्तस्य

---

जिनके नयनयुगल क्रीड़ाशील मीन के समान है, जिनके अधर में मणि विद्रुम स्फुरित है एवं नितम्बरूप द्वीप के अन्तराल में कन्दर्पकरी शिशु के कुम्भद्वय की शोभा की भाँति जिनके वक्षोजद्वय की शोभा है, जिनकी नाभि गभीर आवर्त्तयुक्त है एवं जो विपुल श्रीकृष्णप्रेमामृत की सिन्धुस्वरूपा हैं, उन श्रीराधा के चरण-कमलों की परिचर्य्या करने की योग्यता मात्र की ही मैं आकांक्षी हूँ॥२४२॥

**वृन्दारण्यरहः स्थलीषु विवशाः प्रेमार्त्तिभारोद्गमात्,**
**प्राणेशं परिचारकैः खलु कदा दास्यामयाधीश्वरी।।२४३।।**
**प्रेमाम्भोधि रसोल्लसत्तरुणिमारम्भेण गम्भीरदृग्,**
**भेदाभङ्गि मृदुस्मितामृतनवज्योत्स्नाञ्चितश्रीमुखी।**
**श्रीराधा सुखधामनि प्रविलसद्वृन्दाटवी सीमनि,**
**प्रेयोत्ङ्के रतिकौतुकानि कुरुते कन्दर्पलीलानिधिः।।२४४।।**

---

मार्जनैश्च, प्राणेशं परिचारिकैः प्राणेशं कृष्णं प्रति इत्थं सेवन प्रकारैः, मयाखलु निश्चयेन, कदा दास्या दासितुं योग्या भवेत्।।२४३।। शार्दूलविक्रीड़ितंवृत्तम्।।

प्रेमाम्भोधिरसोल्लसत्तरुणिमारम्भेण गम्भीर दृग्भेदा प्रेमाम्भोधिः श्रीकृष्णः तस्य रसोल्लसत् यत्तरुणिमा तारुण्यं तस्याः आरम्भेण गम्भीरा दृग्भेदा यस्याः सा, भङ्गि मृदुस्मितामृत नवज्योत्स्नाञ्चित श्रीमुखी, भङ्गि सहितं च मृदुहास्यं तदेवामृतं तस्य या नवज्योत्स्ना तदा अञ्चितं व्याप्तं श्रीमुख यस्याः सा, कन्दर्प लीलानिधिः कन्दर्पस्य यावत्योलीलास्तासां उत्पत्तिस्थानरूपा, श्रीराधा प्रतिलसद्वृन्दाटवी सीमनि सुखधामनि, शोभायमानं यद् वृन्दावनं तत् सीमायामेव सुखधामनि, प्रेयोऽङ्के प्रियस्य श्रीकृष्णस्य अङ्कं।।२४४।। शार्दूलविक्रीड़ितंवृत्तम्।।

---

श्रीवृन्दावन की निभृत निकुंज में प्रेमार्त्तिभारविवशा अधीश्वरी श्रीराधा पुष्पमाला निर्माण की शिक्षा देकर तथा चन्दन घर्षण का आदेश देकर, अद्भुत लड्डुकादि निर्माण का विधान देकर एवं कुंजप्रान्त पर्यन्त समार्ज्जन करने का आदेश देकर, प्राणप्रिय श्रीकृष्ण के उद्देश्य से सेवा शिक्षादान कब करेंगी ? ।।२४३।। प्रेमाम्भोधि श्रीकृष्ण के रसोल्लासकारी तारुण्य के आरम्भ में प्रफुल्ल जिनकी गम्भीर दृष्टिभंगी एवं जो सभंगि मृदुहास्यामृतरूप नवज्योत्स्ना प्रफुल्ल श्रीमुखी हैं, वे कन्दर्प लीलानिधि श्रीराधा, शोभाशाली श्रीवृन्दावन की सुखमय कुंज में

**शुद्धप्रेमविलासवैभवनिधिः कैशोरशोभानिधि,**
**वैदग्धी मधुराङ्गभङ्गिमनिधिर्लावण्यसम्पन्निधिः।**
**सौन्दर्यैक सुधानिधिर्मधुपतेः सर्वस्वभूतोनिधिः,**
**श्रीराधाजयतान्महारसनिधिः कन्दर्पलीलानिधिः॥२४५॥**
**नीलेन्दीवरकान्तिलहरी चौरं किशोरद्वयं,**
**त्वय्येतत् कुचयोश्चकास्ति किमिदं रूपेण सम्मोहनम्।**

---

शुद्धप्रेमविलास वैभवनिधिः, शुद्धःअप्राकृतः यः प्रेमविलासः तस्य वैभवनिधिः, कैशोर शोभानिधिः–कैशोरे या शोभा तस्याः अपि उत्पत्तिस्थानम्, वैदग्धीमधुराङ्गभङ्गिमनिधिः वैदग्धीनां यन्मधुरं अङ्गचातुर्य्यं तस्यापिनिधिः, लावण्यसम्पन्निधिः लावण्यमेव सम्पत् तस्याः निधिः, महारसनिधिः, महान् चासौ रसः मधुररस स्तस्याव्युत्पत्तिस्थानं, कन्दर्पलीलानिधिः सौन्दर्य्यैक सुधानिधिः मधुपतेः श्रीकृष्णस्य, सर्वस्वभूतोनिधिः श्रीराधा जयतात्॥२४५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

स्वच्छायामभिवीक्ष्य मणिदर्पणे स्वप्रतिबिम्बं अवलोक्य मुह्यत् हरिः श्रीराधां प्रतिमाह, त्वयि एतत् कुचयोः नीलेन्दीवरवृन्द कान्ति लहरीचौरं किशोद्वयं स्वयं स्वच्छायारूपञ्चेति किशोरद्वयं,

---

प्रियतम के अंक में अति कौतुकयुक्त रतिक्रीड़ा कर रही हैं॥२४४॥ अप्राकृत प्रेमविलास वैभवनिधि, कैशोर शोभानिधि, वैदग्धीगण के मधुर अंग चातुर्य्यनिधि, लावण्यवैभवनिधि, महारसनिधि, कन्दर्प लीलानिधि, सौन्दर्य्यैक सुधानिधि एवं श्रीकृष्ण की सर्वस्वभूतोनिधि श्रीराधा जययुक्त हो रही हैं॥२४५॥

निज प्रतिबिम्ब अवलोकन से विमोहित होकर श्रीकृष्ण कहते हैं, तुम्हारे वक्षोजद्वय में नीलेन्दीवरवृन्द की कान्ति लहरी चौर किशोरद्वय की शोभा विद्यमान है, वे दोनों एवम्विध अनिर्वचनीय सम्मोहन है, अत्र मुझे अपनी सखी बना लो, तब

**तन्माभात्मसखीं कुरु द्वितरुणीयं नौदृढ़ं श्लिष्यति,**
**स्वच्छायामभिवीक्ष्य मुह्यति हरौ राधास्मितं पातु नः।।२४६।।**
**संगत्यापि महोत्सवेन मधुराकारांहृदि प्रयसः,**
**स्वच्छायामभिवीक्ष्य कौस्तुभमणौ सम्भुतशोकक्रुधा।**
**उत्क्षिप्तप्रियपाणिं तिष्ठ सुनयेत्युक्त्वा गतायावहिः,**
**सख्यैसास्रनिवेदनानि किमहं श्रोष्यामि ते राधिके।।२४७।।**

---

किं अनिर्वचनीयं, इदं रूपेण किशोरद्वयरूपेण, सम्मोहनं मां मोहयतीतिभावः, चकास्ति शोभायमानं भवन्ति, तन्मां आत्मसखीं कुरु तस्मात् मां स्वात्मसखीं कुरु, यस्मात् इयं द्वितरुणी नौ आवां दृढ़ श्लिष्यति आलिङ्गनं करिष्यति, आवयोः आलिङ्गनं करिष्यत्येवं रूपो मोहः, हरौ मुह्यति सति राधास्मितं नः अस्माकं पातु॥ २४६॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे राधिके ! महोत्सवेन सङ्गत्यापि केलिविलासोत्वेन मिलितापि, प्रेयसः हृदि प्रियतमस्य श्रीकृष्णस्य हृदि, कौस्तुभमणौ मधुराकारां स्वछायां अभिवीक्ष्य अवलोक्य, सम्भुतशोकक्रुधा उत्पन्नः क्षोभः क्रोधश्च यस्मिन् तथाभूता सति, प्रियपाणिं प्रियतमस्य हस्ते, उत्क्षिप्य, हे विनय ! हे वणिक् ! तिष्ठ, तिष्ठेतिक्रोधे, इति उक्त्वा वहिर्गतायाः ते सख्यै सास्रनिवेदनानि अस्रैः नयननीरैः सहितं निवेदनानि, अहं किं श्रोष्यामि ? ।।२४७।। शार्दूलविक्रीड़ितंवृत्तम्॥

---

यह द्वितरुणी हम दोनों को दृढ़ालिंगन करेंगी, इस प्रकार श्रीहरि में मोह को देखकर, श्रीराधा का मंजुवदन मृदुहास्य से शोभित हो गया, वह हास्य हमारी रक्षा करे॥१४६॥ हे श्रीराधिके ! महोत्सव में सम्मिलित होकर भी प्रियतम के हृदयस्थित कौस्तुभमणि में मधुराकार निज प्रतिबिम्ब का दर्शन कर रोष तथा क्षोभ से प्रियतम के हस्त को उठाकर रहने दो, मैं तुमसे विनय करके बाहर जाऊँगी और सखियों से निवेदन करूँगी, यह सब क्या मैं देख सकूँगी ? ।।२४७।।

**महामणिवर स्रजं कुसुम चञ्चयैरञ्जचितं,**
**स्फुरन्मरकतप्रजाग्रथितमोहितश्यामलम्।**
**महारसमहीपतेरिव विचित्रसिद्धासनं,**
**कदा नु तव राधिके कवरभारमालोकये।।२४८।।**
**मध्ये मध्ये कुसुम खचितं रत्नदाम्ना निबद्धं,**
**मल्लीमाल्यैर्घनपरिमलैर्भूषितं लम्बमानैः।**
**पश्चाद्राजन्मणिवरकृतोदारमाणिक्यगुच्छं,**
**धम्मिल्लं ते हरिकरधृतं कर्हि पश्यामि राधे।।२४९।।**

---

हे श्रीराधिके ! महामणि वरस्रजं महामणीनां पद्मरागादीनां स्रजोमाला यस्मिंस्तं, कुसुमसञ्चयैरञ्चितं कुसुमानां समूहैः व्याप्तं महामरकतप्रभाग्रथितमोहितश्यामलं महामरकतमणे र्या प्रभा तया ग्रथितमेवमोहितं येन एतादृशं श्यामलं, महारसमहीपतेर्विचित्र सिद्धासनमिव महारसः शृङ्गारः तस्याधिराजः शृङ्गाररसराजमूर्त्तिः श्रीकृष्णः तस्य विचित्रसिद्धासनमिव तव कवरभारं सम्बन्धकेशदामं अहं कदा आलोकये पश्यामि॥२४८॥ पृथ्वीवृत्तम्॥

हे श्रीराधे ! मध्ये मध्ये कुसुमखचितं मध्ये मध्ये पुष्पशोभितं, रत्नदाम्नानिबद्धं-रत्नमालयासुष्ठुबद्धं, घनपरिमलैः लम्बमानैः मल्लीमाल्यैः भूषितं निविड़ः पुष्परसोयेषु तैः लम्बमानैः मालती पुष्पमाल्यैः शोभितं, पश्चाद्राजन् मणिवर कृतोदार माणिक्यगुच्छं, पश्चात् शोभायमानं यन्मणिश्रेष्ठं तेन निर्म्मितं माणिक्यगुच्छं यस्य तं, हरिकरधृतं श्रीकृष्णेन स्वकराभ्यामवधृतं वेणीबन्धनार्थ-मितिभावः, ते-तव, धम्मिल्लं कर्हि अहं पश्यामि॥२४९॥ मन्दाक्रान्तावृत्तम्॥

---

हे श्रीराधिके ! महामणिमाला शोभित कुसुम कलाप व्याप्त महामरकत प्रभाग्रथित श्यामल एवं महारस महीपति के विचित्र सिद्धासन के समान आपके कबरी भार का दर्शन मैं कब करूँगी ? ॥२४८॥

**विचित्राभिर्भङ्गीविततिभिरहो चेतसि परं,**
**चमत्कारं यच्छँल्ललितमणिमुक्तादिलसितः।**
**रसावेशाद्वित्तः स्मरमधुरवृत्ताखिलमहोऽ-**
**द्भुतस्ते सीमन्ते नवकनकपट्टो विजयते॥२५०॥**
**अहो द्वैधी कर्त्तुं कृतिभिरनुरागामृतरस,**
**प्रवाहैः सुस्निग्धैः कुटिलरुचिरः श्याम उचितः।**

---

अहो आश्चर्य्ये, ते-तव, सीमन्ते, भाले केशभागद्वयसन्धौ, ललित-मणिमुक्तादिलसितः सुन्दरानि यानि मणिमुक्तादीनि तैः शोभितः, रसावेशाद्वित्तः रसस्य य आवेशस्तेनवित्तः, स्मरमधुर वृत्ताखिलः कन्दर्पस्य यन्मधुराचरणं तदखिलं यस्मिन् सः, महाद्भुतः नवकनकपट्टः मौक्तिकावलिसहितः नवकनकस्य पट्टफलकः, विचित्राभि र्भङ्गीविततिभिः, चेतसि परं चमत्कारं यच्छन् विचित्राभिः भङ्गीनां विततिभिः इतस्ततः शिरश्चालनैः चेतसि श्रेष्ठमानन्दं विस्मयं वा प्रयच्छन्, विजयते, सर्वोत्कर्षेण वर्त्तते॥२५०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

अहो ! हे श्रीराधे ! ते तव सीमन्ते नवरुचिर सिन्दूररचिता इयं सुरेखा, कुटिलरुचिरश्यामः श्रीकृष्णः, सुस्निग्धैः अनुरागामृत रसप्रवाहैः कृतिभिः क्रियाविशेषै, द्वैधी कर्त्तुमुचितः द्विधाभूतंकर्त्तु-

---

हे श्रीराधे ! मध्य-मध्य में कुसुम खचित, रत्नमाला निबद्ध, घन परिमलयुक्त लम्बमान् मालती माल्य के द्वारा विभूषित, पश्चात् में महामाणिक्य गुच्छ शोभित एवं श्रीहरि करधृत आपकी धम्मिल्ल का दर्शन मैं कब करूँगी॥२४९॥ अहो आपके सीमन्त में ललितमणि मुक्तादि लसित रसावेश वित्त, कन्दर्प के अखिल मधुरकृत्य, महाद्भुत नवकनक पट्ट विचित्र भङ्गी विस्तार के द्वारा चित्त को परम विस्मय एवं आनन्द प्रदान कर सर्वोत्कर्ष के साथ शोभित हैं॥२५०॥

अहो ! हे श्रीराधे ! आपके सीमन्त में नव रुचिर सिन्दूर रचिता यह सुरेखा, कुटिलरुचिर श्याम, सुस्निग्ध अनुरागामृतरस

**इतीयं सीमन्ते नवरुचिरसिन्दूररचिता,**
**सुरेखा नः प्रख्यापयितुमिव राधे विजयते।।२५१।।**
**चकोरस्ते वक्त्रामृत किरणबिम्बे मधुर,**
**स्तव श्रीपादाब्जे जघनपुलिने खञ्जनवरः।**
**स्फुरन्मीनोजातस्त्वयि रस सरस्यां मधुपतेः,**
**सुखाटव्यां राधे त्वयि च हरिणस्तस्य नयनम्।।२५२।।**
**स्पृष्ट्वा स्पृष्ट्वा मृदुकरतलेनाङ्गमङ्गं सुशीतं,**
**सान्द्रानन्दामृतरसह्रदे मज्जतो माधवस्य।**

---

मुचितः, इति नः अस्माकम्, प्रख्यापयितुमिव-विज्ञापयितुमिव विजयते॥२५१॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे श्रीराधे ! तस्य मधुपतेः श्रीकृष्णस्य नयनं ते-तव, वक्त्रामृत किरणबिम्बे चकोरः जातः मुखमेवामृतकिरश्चन्द्रः तस्य बिम्बे चकोर इव सर्वदा पश्यन् जीवति, तव श्रीपादाब्जे मधुकरः जातः, जघनपुलिने खञ्जनवरः जातः, तव जघनमेव पुलिनं तत्र खञ्जनेषु श्रेष्ठवद्विचरन् जीवति, रससरस्यां त्वयि स्फुरन् मीनोजातः, रसस्य या सरसी तस्यां त्वयि चञ्चलमीनरूपः, च सुखाटव्यां त्वयि हरिणः जातः, त्वयि सुखस्यारण्ये हरिणवत् तत् सुखं सेवमान एवं जीवति॥२५२॥ शार्दूलविक्रीड़ितंवृत्तम्॥

---

प्रवाह की क्रिया विशेष के द्वारा द्विधाभूत करने को उपयुक्त है, हम सबको विज्ञापित करने के निमित्त ही मानो, वह जययुक्त हो रही हैं ॥२५१॥

हे श्रीराधे ! मधुपति श्रीकृष्ण के नयन, आपके वदनचन्द्र का सुधापान करने में चकोरस्वरूप हैं, आपके श्रीचरण-कमल में मधुकर, जघन पुलिन में खञ्जनवर, रससरसी में चंचल मीन एवं सुखारण्यरूप आपमें हरिणस्वरूप में उत्पन्न हुआ है॥२५२॥

**अङ्के पङ्केरुहसुनयना प्रेममूर्त्तिः स्फुरन्ती,**
**गाढ़ाश्लेषोन्नमितचिवुका चुम्बिता पातु राधा॥२५३॥**
**सदा गायं गायं मधुरतरराधाप्रिययशः,**
**सदा सान्द्रानन्दा नवरसदराधापतिकथाः।**
**सदा स्थायं स्थायं नवनिभृतराधारतिवने,**
**सदा ध्यायं ध्यायं विवशहृदि राधापदसुधाः॥२५४॥**

---

मृदुकरतलेन सुशीतं सुस्निग्धं, अङ्गमस्य स्पृष्ट्वा स्पृष्ट्वा सान्द्रानन्दामृत रसह्लदे मज्जतोमाधवस्य अङ्के स्फुरन्ती पङ्केरुहसुनचना कमललोचना, प्रेममूर्त्तिः गाढ़ाश्लेषोन्नमितचिवुका निविड़ालिङ्गने उन्नमितं उत्तोलितं चिवुकं यस्याः चुम्बिता राधा नः पातु॥२५३॥ मन्दाक्रान्तावृत्तम्॥

अहं नव निभृत राधा रतिवने नवीनं च निभृतं यत् राधारतिवनं राधायाः केलिकुञ्जकाननं तस्मिन् सदास्थायं स्थायं स्थित्वा स्थित्वा, मधुरतर राधाप्रिययशः मधुरात् मधुरं यद्राधाप्रिययशः श्रीकृष्णः तद्, सान्द्रानन्दा घनानन्दरूपा, नवरसदराधापति कथाः, नवं नवं रसं ददातीति नवरसदः श्रीकृष्णः स एव राधापतिः तस्य कथाः, सदा गायं गायं च राधापदसुधाः सदाध्यायं ध्यायं कदा विवशहृदि भवेयम्॥२५४॥ शिखरिणीवृत्तम्॥

---

मृदुकरतल द्वारा सुस्निग्ध प्रति अंग का स्पर्श कर निविड़ आनन्दामृत रसह्लद में निमज्जित माधव के अंग में शोभिता पंकज नयना प्रेममूर्त्ति, गाढ़ालिंगन से उन्नमित चिवुका, चुम्बिता श्रीराधा हमारी रक्षा करें॥२५३॥ श्रीराधा के नव निभृत केलिकुंज कानन में निरन्तर अवस्थान पूर्वक, मधुरादपि मधुर श्रीराधा प्रिय यश एवं निविड़ आनन्दस्वरूपा नवरसद श्रीराधापति की कथा का गान सर्वदा करते-करते एवं श्रीराधापद सुधा का ध्यान सर्वदा करते-करते मैं कब विवश हृदय हो जाऊँगी ? ॥२५४॥

**श्यामश्यामेत्यमृतरससंस्राविवर्णान् जपन्ती,**
**प्रेमौत्कण्ठ्यात् क्षणमपि सरोमाञ्चमुञ्चैर्लपन्ती।**
**सर्व्वत्रोच्चाटनमिव गता दुःखदुःखेन पारं,**
**काङ्क्षन्तयहो दिनकरमलं क्रुध्यती पातु राधा॥२५५॥**
**कदाचिद् गायन्ती प्रियरतिकलावैभवगतिं,**
**कदाचिद् ध्यायन्ती प्रियसहभविष्यद् विलसितम्।**
**अलं मुञ्चामुञ्चेत्यपि मधुरमुग्धप्रलपितै–**
**र्नयन्ती श्रीराधा दिनमिह कदा नन्दयतु नः॥२५६॥**

---

श्यामश्यामेत्यमृतरससंस्राविवर्णान् जपन्ती हे श्याम ! हे श्याम ! इति अमृतरससंस्राविवर्णान् अक्षरानि जपन्ती, क्षणमपि प्रेमौत्कण्ठ्यात् सरोमाञ्चमुञ्चैर्लपन्ती कथयन्ती, सर्वत्रोच्चाटनमिव गता, सर्वत्रोच्चाटनं स्वदेशादेर्भ्रमणरूपमभिचारकर्मविशेषमिव प्राप्ता, तस्या कुत्रापि मनो नलगतीतिभावः। दुःखदुःखेन अह्नोपारं काङ्क्षती बहुदुःखेन दिवावसानं वाञ्छन्ती, दिनकरं प्रति अलं निरर्थकं, क्रुध्यतीराधा पातु॥२५५॥ मन्दाक्रान्तावृत्तम्॥

कदाचिद् प्रियरतिकलावैभवगतिंगायन्ती प्रियस्य या रतिकला तदेव वैभवस्य गतिं तदेव गायन्ती, कदाचिद् प्रियेन सह भविष्यद् विलसितं ध्यायन्ती, ध्यानं कुर्वती, मुञ्च आमुञ्च अलं इति अतिमधुर मुग्ध प्रलपितैः दिनं नयन्ती, इह श्रीराधा नः अस्मान् कदा नन्दयतु॥२५६॥ शिखरिणीवृत्तम्॥

---

जो हे श्याम ! हे श्याम ! इस अमृतरसस्राविवर्णसमूह का जप करती रहती हैं, प्रेमोत्कण्ठा से रोमांच के साथ उच्चैःस्वर से गाती रहती हैं, जो सर्वत्र उच्चाटन प्राप्त हैं, अनेक कष्ट से दिवसानसान की कामना करती हैं एवं दिनकर के प्रति वृथाक्रुब्ध हो जाती हैं, वह श्रीराधा मेरी रक्षा करें॥२५५॥ कभी प्रियतम की रतिकला वैभवगति का गान करती हैं, प्रिय के साथ भविष्यत्

**श्रीगोविन्द व्रजवरबधूवृन्दचूड़ामणिस्ते,**
**कोटिप्राणाभ्यधिकपरमप्रेष्ठपादाब्जलक्ष्मीः।**
**कैङ्कर्य्येणाद्भुतनवरसेनैव मां स्वीकरोतु,**
**भूयोभूयः प्रतिमुहुरधिस्वाम्यहं प्रार्थयामि।।२५७।।**
**अनेन प्रीता मे दिशति निजकैङ्कर्य्यपदवीं,**
**दवीयो दृष्टीनां पदमहह राधां सुखमयी।**

---

हे श्रीगोविन्द ! हे अधिस्वामिन् ! ते–तव, कोटिप्राणाभ्यधिक, परमप्रेष्ठपादाब्जलक्ष्मीः कोटिप्राणादपि अधिकं यथास्यात् तथा परमप्रेष्ठा चासौ पादाब्जयोर्लक्ष्मीर्यस्याः सा, व्रजवरबधूवृन्दचूड़ामणिः व्रजे या श्रेष्ठा बध्वः तासां समूहानां चूड़ामणिः श्रीराधा, अद्भुत नवरसेन कैङ्कर्य्येण एव मां स्वीकरोतु, अहं भूयोभूयः प्रतिमुहुः संप्रार्थये प्रार्थयामि॥२५७॥ मन्दाक्रान्तावृत्तम्॥

अहह ! अत्याश्चर्य्ये ! एवं चित्ते निधाय अहं द्रुत कनकपीतच्छवि पटम् द्रवीभूतं यत् कनकं तद्वत् पीतच्छविः पटं वसनं यस्यतम्, वर्हमुकुटं मयूरपिञ्छ रचितं मुकुटं यस्य तं, कुवलयरुचिं नीलकमल कान्तिं, किशोरं श्रीकृष्णं, ध्यायामि, अनेन

---

केलिविलास का ध्यान करती हैं, परिहित भूषणादि मोचन कर उससे प्रयोजन क्या है ? इस प्रकार अति मधुर प्रलाप के साथ दिन यापन करती रहती हैं, वह श्रीराधा कब हम सभी को आनन्द प्रदान करेंगी॥२५६॥

हे श्रीगोविन्द ! हे अधिस्वामिन् ! आपके कोटि प्राण की अपेक्षा अधिक प्रेष्ठालक्ष्मी हैं, जिनके पादपद्म में पतिता अद्भुत नवरसकैङ्कर्य्य के साथ, व्रजबधूवृन्द की चूड़ामणि श्रीराधा मुझे अंगीकार करें, प्रति मुहूर्त्त में बारम्बार यही प्रार्थना करती हूँ॥२५७॥

अहो ! मैं गलित सुवर्णपीतच्छविवसनमयूरपिञ्छ रचित मुकुटधारी, नीलेन्दीवरवरकान्ति किशोर श्रीकृष्ण का ध्यान हृदय

**निधायैवं चित्ते कुवलयरुचिं वर्हमुकुटं,**
**किशोरं ध्यायामि द्रुतकनकपीतच्छविपटम्।।२५८।।**
**ध्यायं स्तंशिखिपिच्छमौलिमनिशं तन्नाम संकीर्त्तय-**
**न्नित्यं तच्चरणाम्बुजं परिचरंस्तन्मन्त्रवर्यं जपन्।**
**श्रीराधापददास्यमेव परमाभीष्टं हृदा धारयन्,**
**कर्हि स्यां तदनुग्रहेणपरमोद्भूतानुरागोत्सवः।।२५९।।**
**श्रीराधारसिकेन्द्ररूपगुणवद्गीतानि संश्रावयन्,**
**गुञ्जामञ्जुलहारवर्हमुकुटाद्यावेदयंश्चाग्रतः।**

---

प्रीता-अनेन कृत्ये न प्रसन्ना सती, सुखमयी राधा दवीयो दृष्टिनां पदं अतिदूरदृष्टिनां पदे सर्वोच्चपदं श्रीकृष्णभक्तेः फलमित्यर्थः, निज कैङ्कर्य्य पदवीं निज किङ्करीत्वं मे-मह्यं दिशतु ददातु॥२५८॥ शिखरिणीवृत्तम्॥

अहं तं शिखिपिञ्छमौलिं श्रीकृष्णं अनिशं निरन्तरम् ध्यायन् सर्वदा तन्नाम सङ्कीर्त्तयन्, तच्चरणाम्बुजं तच्चरणकमलं, नित्यं परिचरम् च नित्यं तन्मन्त्रवर्य्यं मन्त्रेषु श्रेष्ठं, जपन्, परमाभीष्टं श्रीराधापददास्यं एव हृदा धारयन्, तदनुग्रहेण परमोद्भूता-नुरागोत्सवः, परमः श्रेष्ठः उद्भूतः य अनुरागः तस्य उत्सवो यस्य एतादृशः, कर्हि स्याम्॥२५९॥ शार्दूलविक्रीड़ितम्॥

अहं श्रीराधारसिकेन्द्ररूपगुणवद्गीतानि संश्रावयन् श्रीराधा कृष्णयो रूपं गुणाश्च तद्युक्तानि गीतानि सम्यक् श्रावयन्, च

---

में करती रहती हूँ, इससे सुखमयी श्रीराधा अतिशय प्रीता होकर अति दुर्ल्लभ निज कैङ्कर्य्य पदवीं मुझको प्रदान करें॥२५८॥ शिखिपिञ्छमौलि श्रीकृष्ण का ध्यान सर्वदा करते-करते एवं उनका नाम कीर्त्तन सर्वदा करते-करते उनके श्रीचरण-कमल की परिचर्य्या नित्य करते-करते उनके मन्त्रराज का जप नित्य करते-करते एवं परमाभीष्ट श्रीराधा पददास्य को हृदय में धारणकर श्रीराधा के अनुग्रह से परमोद्भूत अनुरागोत्सव मेरा कब होगा ?॥२५९॥

**श्यामाप्रेषितपूगमाल्यनवगन्धाद्यैश्च संप्रीणयं,**
**स्त्वत्पादाब्जनखच्छटारसह्रदे मग्नः कदा स्यामहम्।।२६०।।**
**क्वासौ राधा निगमपदवी दूरगा कुत्र चासौ,**
**कृष्णस्तस्याः कुचमुकुलयोरन्तरैकान्तवासः।**
**क्वाहं तुच्छः परममधमः प्राण्यहो गर्ह्यकर्मा,**
**यत्तन्नाम स्फुरति महिमा ह्येष वृन्दावनस्य।।२६१।।**

---

गुञ्जामञ्जुल हारवर्ह मुकुटादि अग्रतः आवेदयन् गुञ्जानांमधुरा ये हाराः श्रीप्रियार्थम्, मयूरपिञ्छरचित मुकुटादि श्रीप्रियस्यार्थं तदग्रत एव निवेदयन्, च श्यामप्रेषित पूगमाल्य नवगन्धाद्यैः प्रीणयन् श्यामेन प्रेषितः यः पूगः गुवाकः माल्यं नवपुष्पसुगन्धादीनि तैः प्रीणयन् तां, तत् पादाब्जनखच्छटारसह्रदे कदा मग्नः स्याम्॥२६०॥ शार्दूलविक्रीड़ितम्॥

निगमपदवी दूरगा असौराधा क्व–वेदस्य या पदवी स्थानं तस्माद् दूरे वर्त्तमाना, ब्रह्मादेरगोचरा इति भावः, असौ राधा क्व, तस्याः कुच कमलयोरन्तरैकान्तवासः असौ कृष्णाश्च कुत्र ? अहो आश्चर्य्ये, क्व अहं तुच्छः–नगण्यः, परमं अधमः गर्ह्य कर्म्मा निन्द्यं कर्म यस्य एतादृशः, प्राणी जीवः, यत्तन्नाम स्फुरति तत् हि, निश्चयेन एष वृन्दावनस्य महिमाः ! ॥२६१॥ मन्दाक्रान्तावृत्तम्॥

---

श्रीराधारसिकेन्द्र के रूप, गुणादि समन्वित गीत समूह का श्रवण कराकर, सुन्दर गुंजाहार एवं वर्हमुकुटादि पुरोभाग में समर्पण कर एवं श्यामाप्रेरित गुवाग् माल्यं नवगन्धादि के द्वारा सम्यक् रूप से प्रीति सम्पादन करते–करते मैं कब उन दोनों के चरण–कमलों के च्छटारूप रसह्लद में निमग्न हो जाऊँगी॥२६०॥ निगम पदवीं से दूर में वर्त्तमान अर्थात् विधि की अगोचरा श्रीराधा कहाँ और उनके स्तन कमल युगल के मध्य में एकान्त भाव से अवस्थानकारी कहाँ ? अहो ! और कहाँ मैं अति अधम,

**वृन्दारण्ये नवरसकलाकोमल प्रेममूर्त्तेः,**
**श्रीराधायाश्चरणकमलामोदमाधुर्य्यसीमा।**
**राधां ध्यायन् रसिक तिलकेनात्तकेलीविलासं,**
**तामेवाहं कथमिहतनुं न्यस्य दासीभवेयम्।।२६२।।**
**रा कालिन्दि त्वयि मम निधिः प्रेयसा खेलतोऽभूद्,**
**भो भो दिव्याद्भुततरुलतास्तत्करस्पर्शभाजः।**
**हे राधाया रतिग्रहशुका हे मृगा हे मयूरी,**
**भूयोभूयोः प्रणतिभिरहं प्रार्थये वोऽनुकम्पाम्।।२६३।।**

---

अहं इह वृन्दारण्ये तामेव रसिक तिलकेनात्तकेलिविलासां रसिकवरेण श्रीकृष्णेन सह स्वीकृता केलीनां विलासा विलसनानि यथा ताम्, राधां ध्यायन् तनुं न्यस्य-त्यक्त्वा, नवरसकलाकोमल प्रेममूर्त्तेः श्रीराधायाः चरणकमलामोदमाधुर्य्यसीमा दासी कथमेव भवेयम्॥२६२॥ मन्दाक्रान्तावृत्तम्॥

हा कालिन्दि ! अत्यार्त्तौ, हे कालिन्दि ! हे यमुने ! त्वयि मम निधिः श्रीराधा, प्रेयसा श्रीकृष्णेन सह, खेलितोऽभूत्। भो भो - दिव्याद्भुत तरुलताः तत् करस्पर्शभाजः, दिव्याः अप्राकृताः अद्भुताश्च याः तरुलताः तत् तस्याः करस्पर्शपात्रभूताः तस्मात् महाभाग्यरूपाः, हे राधाया रतिगृहशुकाः श्रीराधायाः केलिभवने यत् शुकाः तत् सम्बोधनम्, हे मृगाः, हे मयूरा, अहं भूयो भूयः, प्रणतिभिः वः-युष्माकं, अनुकम्पां कृपां प्रार्थये-वाञ्छामि॥२६३॥ मन्दाक्रान्तावृत्तम्॥

---

गर्हितकर्मा तुच्छजीव ! तथापि जब उनके नाम स्फुरित हो रहे हैं, तब वह निश्चय ही श्रीवृन्दावन की महिमा हैं॥२६१॥ मैं इस श्रीवृन्दावन में रसिक शिरोमणि के साथ केलिविलासवती श्रीराधा का ध्यान करते-करते तनु त्यागकर, उन नवरसकला कोमलप्रेममूर्त्ति श्रीराधा के चरण-कमल की सुगन्धमाधुर्य्य की अवधिस्वरूप दासी कैसे बनूँगी ? ॥२६२॥

**बहन्ती राधायाः कुचकलसकाश्मीरजमहो,**
**जलक्रीड़ावेशाद्गलितमतुलप्रेमरसदम्।**
**इयं सा कालिन्दीविकसित नवेन्दीवररुचि,**
**च्छटामन्दीभूतं हृदयमिह सन्दीपयतु मे।।२६४।।**
**सद्योगीन्द्रसुदृश्यसान्द्ररसदानन्दैकसन्मूर्त्तयः,**
**सर्व्वेऽप्यद्भुतसन्महिम्नि मधुरे वृन्दावने सङ्गताः।**

---

अहो ! आश्चर्य्ये ! राधायाः जलक्रीड़ावेशाद् गलितं-जलक्रीड़ायाम् आवेशात् गलितं प्रक्षालितं प्रेमरसदं अतुलं अनुपमं, कुचकलशकाश्मीरजं बहन्ती श्रीराधायाः कुचकलशयोलग्नो यः काश्मीरजः कुङ्कुमः तं बहन्ती, विकसितं नवेन्दीवररुचिः प्रफुल्लं यन्नीलकमलं तद्वच्छटा यस्याः, सा इयं कालिन्दी यमुना, इह मे-मम, मन्दीभूतं मन्दतां प्राप्तं, हृदयं सदा सन्दीपयतु॥२६४॥ शिखरिणीवृत्तम्॥

अद्भुत सन्महिम्नि अद्भुताश्चासौ सन्महिमा यस्मिन् तस्मिन्, मधुरे वृन्दावने सङ्गताः सम्मिलिता, ये क्रूराः पापिनोऽपि च सतां न सम्भाष्याः दृश्याश्च ते सर्वेऽपि सद्योगीन्द्रसुदृश्य सान्द्ररसदानन्दैक सन्मूर्त्तयः सन्ति सद्योगीन्द्राणां याः सुदृश्याः

---

हा यमुने ! तुम्हारे तट में ही मेरी निधि-प्रियतम के साथ क्रीड़ा करती रहती थीं, ओह ! दिव्याद्भुत तरुलतागण, आप सभी उनके कर-स्पर्शरूप सौभाग्य के पात्र हैं; हे श्रीराधा के केलिभवनस्थ शुकवृन्द ! हे मयूर समूह ! हे मृगयूथ ! मैं आप सभी की भूयोभूयः नमस्कार पूर्वक कृपा प्रार्थना कर रही हूँ॥२६३॥ अहो ! जो जलक्रीड़ावेश से गलित अनुपम प्रेमरसद श्रीराधा के कुचकलशलग्न कुङ्कुम पंक को वहन करती रहती हैं, वह प्रफुल्ल नवेन्दीवररुचि श्रीयमुना मेरे इस मन्दीभूत हृदय को सर्वदा सन्दीपित करें॥२६४॥

अद्भुत महिमाविशिष्ट मधुर श्रीवृन्दावन में सम्मिलित क्रूर ऐसा कि जो साधुगणों के सम्भाषण दर्शन के भी अयोग्य हैं,

**ये क्रूरा अपि पापिनो नच सतां संभाष्य दृश्याश्च ये,**
**सर्व्वान् वस्तुतयानिरीक्ष्य परमस्वाराध्यबुद्धि र्मम।।२६५।।**
**यद्राधापदकिङ्करीकृतहृदा सम्यग् भवेद्गोचरं,**
**ध्येयं नैव कदापि यद्धृदि विना तस्याः कृपास्पर्शतः।**
**यत् प्रेमामृतसिन्धुसाररसदं पापैकभाजामपि,**
**तद् वृन्दावन दुष्प्रवेशमहिमाश्चर्यं हृदि स्फूर्ज्जतु।।२६६।।**
**राधाकेलिकलासु साक्षिणि कदा वृन्दावने पावने,**
**वत्स्यामि स्फुटमुज्ज्वलाद्भुतरसे प्रेमैकमत्ताकृतिः।**

---

सान्द्रारसदाः निविड़ रसदायिन्यः आनन्दैक सत्तारूपाः मूर्त्तयः येषां ते सर्वेसन्ति, तान् सर्वान् वस्तुतया निरीक्ष्य मम परम स्वाराध्य बुद्धिः॥२६५॥ शार्दूलविक्रीड़ितंवृत्तम्॥

यत् राधा पदकिङ्करी कृतहृदां सम्यग् गोचरं भवेत्–राधापदयोः किङ्करीकृत हृदयं येषां तेषां यत् सम्यग् गोचरं भवेत्–यत् तस्याः श्रीराधायाः कृपास्पर्शतः विना हृदि कदापिनैव ध्येयम् तद्ध्यानं कदापि नैवायातीति भावः, यत् पापैक भाजामपि प्रेमामृतसिन्धुसार रसदम् पापमेव एकं भजन्ति ये ते पापैकभाजः तेषामपि प्रेमामृतस्य यः सिन्धुः तस्य साररसं ददातियत् तद् वृन्दावन दुष्प्रवेश महिमाश्चर्य हृदि स्फुर्जथु॥२६६॥ शार्दूलविक्रीड़ितंवृत्तम्॥

प्रेमैकमत्ताकृतिः प्रेम्ना एका विवशआकृति र्यस्य सः, अहं

---

वे सब ही योगीन्द्रगणों के सुदृश्य निविड़ रसद आनन्दैक सत्ताप्रदरूप में मूर्त्तिमान् हैं, वस्तुतः उन सभी को निरीक्षण करके ही मेरी परम सुष्ठु आराध्य बुद्धि स्फुरित हो रही है॥२६५॥ जो श्रीराधापद किंकरीकृत हृदयवृन्द के समीप में गोचरीभूत हैं, जो उनके कृपास्पर्शशून्य हृदय में कदापि ध्येय नहीं हैं, जो पापैकपरायण जनगण को रसामृतप्रद हैं, वे श्रीवृन्दावन के दुष्प्रवेश महिमाश्चर्य हृदय में स्फुरित होवें॥२६६॥

**तेजोरूपनिकुञ्ज एव कलयन् नेत्रादिपिण्डे स्थितं,**
**तादृक् स्वोचितदिव्यकोमलवपु स्वीयं समालोकये।।२६७।।**
**यत्र यत्र मम जन्मकर्मभि र्नारकेऽथ परमे पदे मम।**
**राधिकारतिनिकुञ्जमण्डली तत्रतत्रहृदि मे विराजताम्।।२६८।।**
**क्वाहं मूढ़मतिः क्व नाम परमानन्दैक सारं रसं,**
**श्रीराधाचरणानुभावकथया स्यन्दायमानागिरः।**

---

राधा केलिकलासु साक्षिणि स्फुटमुज्ज्वलाद्भुतरसे प्रकट मुज्ज्वलः शृङ्गारश्चासौ अद्भुतः रसे यस्मिन् तस्मिन्, पावने पवित्ररूपे, वृन्दावने कदा वत्स्यामि, एवञ्च तेजोरूप निकुञ्ज एव कलयन् नेत्रादिपिण्डस्थितं तादृक् स्वीयं स्वोचितदिव्यकमलवपुः कदा समालोकये॥२६७॥ शार्दूलविक्रीड़ितंवृत्तम्॥

नरके पदे अथवा परमे पदे कर्मभि यत्र यत्र मम जन्म स्यात् तत्र तत्र राधिका रति निकुञ्जमण्डली राधिकायाः रतिर्यत्र तादृशं यन्निकुञ्जतन्मिण्डलीं मे-मम हृदि विराजताम्॥२६८॥ रथोद्धतावृत्तम् रात्परैर्नरलगैरथोद्धता॥

अहं मूढ़मतिः क्व, क्व परमानन्दैक सारं रसंनाम ? परमश्चासौ आनन्दैक साररूपं रसं यस्मिन् तन्नाम क्व ? तथापि श्रीराधा चरणानुभावकथया निस्यन्दमानाः श्रीराधायाश्चरणप्रभावस्य

---

मैं कब प्रेमविवशाकृति होकर श्रीराधाकेलिकलासाक्षी प्रकट उज्ज्वलाद्भुतरसयुक्त पवित्र श्रीवृन्दावन में निवास करूँगी ? एवं तेजोरूप निकुंज कलित नेत्रादि पिण्डस्थित तादृश स्वीय उपयोगी दिव्य कोमल वपु का अवलोकन कब करूँगी॥२६७॥ नरक अथवा स्वर्ग में निजकृत कर्म से जिस किसी स्थान में मेरा जन्म क्यों न हो, उस-उस स्थान में ही श्रीराधा केलिनिकुंज मण्डल की स्मृति मेरे हृदय में वैसी ही विराजित होवे॥२६८॥

**लग्नाः कोमलकुञ्जपुञ्जविलसद् वृन्दाटवीमण्डले,**
**क्रीड़च्छ्रीवृषभानुजापदनखज्योतिश्छटाः प्रायशः।।२६९।।**
**श्रीराधे श्रुतिभि र्बुधैर्भगवताप्यामृग्यसद्वैभवे,**
**स्वस्तोत्रस्वकृपात एव सहजायोग्योऽप्यहं कारितः।**
**पद्येनैव सदापराधिनिमहन्मार्गे विरुध्य त्वदे,**
**काशे स्नेहजलाकुलाक्षि किमपि प्रीतिं प्रसादी कुरु।।२७०।।**

---

कथया निस्यन्द मानाः, ममगिरः प्रायशः कोमलकुञ्जपुञ्जविलसद् वृन्दाटवीमण्डले लग्नाः, क्रीड़च्छ्रीवृषभानुजापदनखज्योतिश्छटाः अभवन् क्रीड़मानाः श्रीराधापदनखज्योतिषः छटा लेखा यासु ताः अभवन्॥२६९॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे श्रुतिभिः बुधै र्भगवताप्यमृग्य सद्वैभवे ! श्रुतिभिः वेदैः बुधैः नारदादिभिश्च भगवता विष्णुना चापि एतैरामृग्यं अन्विष्यं सद्वैभवं यस्याः हे तथाविधे ! हे श्रीराधो ! इदं स्वस्तोत्रं सहजो योग्योऽप्यहं कारितः स्वकृपात एव नतु मत्कृतेन श्लोकरूपेण स्वस्तोत्रं प्रति सहजतया योग्यः कृतोऽस्मि, अतः हे स्नेहजलाकुलाक्षि ! स्नेहरूप जलेन आकुले अक्षिणी यस्याः हे तयारूपे ! पद्येनैव सदापराधिनि पद्यरचनैव सदा अपराधवति, महन्मार्ग विरुद्धत्वदेकाशे महतानारदाम्बरीषादीनां यन्मार्गं भजनमार्ग

---

मैं अति मूढ़मति कहाँ और कहाँ परमानन्द का साररसरूप श्रीनाम ? तथापि श्रीराधा के श्रीचरणानुभाव कथन के द्वारा निस्यन्दमान् मेरे वाक्य समूह प्रायशः कोमल कुंजपुंज विलसित श्रीवृन्दावन में संलग्न एवं क्रीड़ामान् श्रीराधा के पदनख ज्योति च्छटा से उद्भासित हो रहे हैं॥२६९॥ वेद समूह, नारदादि बुधगण एवं भगवान् विष्णु भी जिनके सद्वैभव का अन्वेषण क़रते रहते हैं, तादृश सद्वैभव विशिष्टे ! हे श्रीराधे ! त्वदीय स्वतोत्र में मेरी योग्यता का अहंकार होने पर भी वह भी आपकी कृपा से ही हुआ है, अतएव हे स्नेहजलाकुलाक्षि ! मैं पद्य रचना के द्वारा सर्वदा

**अद्भुतानन्दलोभश्चेन्नाम्ना रससुधानिधिः,**
**स्तवोऽयं कर्णकलशै गृहीत्वा पीयतां बुधाः।।२७१।।**
**स जयति गौरपयोधिर्मायावादार्कतापसन्तप्तम्।**
**हृन्नभ उदशीतलयत् यो राधारससुधानिधिना।।२७२।।**

---

तद्विरुद्धा त्वदीया एका आशा यस्मिन् तस्मिन् मयि, किमपि अनिर्वचनीयां प्रीतिं प्रसादी कुरु॥२७०॥ शार्दूलविक्रीड़ितंवृत्तम्॥

हे बुधाः–हे पण्डित रसिकजनाः, अद्भुतानन्दलोभश्चेत्तर्हि नाम्ना रससुधानिधिरयं स्तवः कर्णकलसैः गृहीत्वा भवद्भिः पीयतां अद्भुतं अप्राकृतं यदानन्दं तस्मिन् लोभश्चेत्, तर्हि नाम्ना श्रीराधारससुधानिधिः अयं स्तवः कर्णाविव कलसैः गृहीत्वा पीयतां। (अनुष्टुपवृत्तम् लक्षणञ्चेदं), पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः॥ गुरु षष्ठञ्च जानीयात् शेषेस्वनियमो मतः॥२७१॥

यः श्रीराधारससुधानिधिना मायावादार्कतापसन्तप्तं निर्भेदब्रह्मज्ञानं एव सूर्य्यः तस्य तापेन सन्तप्तं=हृन्नभः= हृदयाकाशं=उदय=शीतलयत् सः गौरपयोधि=श्रीगौराङ्ग एव मेघस्वरूपः, जयति सर्वोत्कर्षेण वर्त्तते॥२७२॥ आर्य्यावृत्तम्॥

---

अपराधी होकर भी शरणागत हूँ, सुतरां मेरे प्रति अनिर्वचनीय कृपादृष्टि प्रदान करो॥२७०॥ हे बुधगण ! यदि अद्भुत आनन्दोपभोग में लोभ हो, तब श्रीराधारससुधानिधि नामक स्तव का पान कर्णकलश के द्वारा करते रहें॥२७१॥ जिन्होंने श्रीराधारससुधानिधि के द्वारा मायावादार्क ताप सन्तप्त हृदयाकाश को उत्तम रूप से शीतल किया है, वे श्रीगौरपयोधि जययुक्त हो रहे हैं॥२७२॥

यह आर्या छन्द है, लक्षण–प्रथम तृतीयपाद में द्वादश मात्रा, द्वितीय चरण में अष्टादश मात्रा तथा चतुर्थ चरण में पंचदश मात्रा हैं।

**इति श्रीश्रील प्रबोधानन्दसरस्वतिगोस्वामिपादविरचितः**
**श्रीश्रीराधारससुधानिधिः समाप्तः॥**

**गुणैः सर्वैर्हीनोऽप्यहमखिल जीवाधमतमोऽ-**
**प्यशेषै र्दोषैः स्वैरपि च वलितोदुर्मतिरपि।**
**प्रसादाद् यस्यैवाविदमहह राधां ब्रजपतेः,**
**कुमारं श्रीवृन्दावनमपि स गौरो मम गतिः॥**

---

इति श्रीवृन्दावनाधीश्वरी श्रीराधाचरणकमलानुचर
परिब्राजकाचार्य्यवर्य्य श्रीमत् प्रबोधानन्दसरस्वती विरचितं
श्रीराधारससुधानिधिस्तोत्रकाव्यं समाप्तम्॥

शास्त्रिणा हरिदासेन वृन्दारण्यनिवासिना,
कृतेयं विमलाव्याख्या विभीषिकाविभञ्जनी॥
नेत्ररन्ध्रग्रहेचन्द्रे शाकेऽस्मिन् भौमवासरे,
चैत्रेमासिसितेपक्षे टीकयं पूर्णता गता॥

## श्रीहरिदास शास्त्री सम्पादिता सद्ग्रन्थावली

| क्रम. सद्ग्रन्थ | मूल्य |
|---|---|
| १–वेदान्तदर्शनम् भागवतभाष्योपेतम् | १५०.०० |
| २–श्रीनृसिंह चतुर्दशी | १०.०० |
| ३–श्रीसाधनामृतचन्द्रिका | २०.०० |
| ४–श्रीगौरगोविन्दार्चनपद्धतिः | २०.०० |
| ५–श्रीराधाकृष्णार्चनदीपिका | २०.०० |
| ६–७–८–श्रीगोविन्दलीलामृतम् | ४५०.०० |
| ९–ऐश्वर्यकादम्बिनी | ३०.०० |
| १०–श्रीसंकल्पकल्पद्रुम | ३०.०० |
| ११–१२–चतुःश्लोकीभाष्यम्, श्रीकृष्णभजनामृत | ३०.०० |
| १३–प्रेमसम्पुट | ४०.०० |
| १४–श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| १५–ब्रजरीतिचिन्तामणि | ४०.०० |
| १६–श्रीगोविन्दवृन्दावनम् | ३०.०० |
| १७–श्रीकृष्णभक्तिरत्नप्रकाश | ५०.०० |
| १८–श्रीहरेकृष्णमहामन्त्र | ५.०० |
| १९–श्रीहरिभक्तिसारसंग्रह | ५०.०० |
| २०–धर्मसंग्रह | ५०.०० |
| २१–श्रीचैतन्यसूक्तिसुधाकर | १०.०० |
| २२–श्रीनामामृतसमुद्र | १०.०० |
| २३–सनत्कुमारसंहिता | २०.०० |
| २४–श्रुतिस्तुति व्याख्या | १००.०० |
| २५–रासप्रबन्ध | ३०.०० |

| क्रम. सद्ग्रन्थ | मूल्य |
|---|---|
| २६–दिनचन्द्रिका | २०.०० |
| २७–श्रीसाधनदीपिका | ६०.०० |
| २८–स्वकीयात्वनिरास, परकीयात्वनिरूपणम् | १००.०० |
| २९–श्रीराधारससुधानिधि (मूल) | ३०.०० |
| ३०–श्रीराधारससुधानिधि (सानुवाद) | ११०.०० |
| ३१–श्रीचैतन्यचन्द्रामृतम् | ३०.०० |
| ३२–श्रीगौरांग चन्द्रोदय | ३०.०० |
| ३३–श्रीब्रह्मसंहिता | ५०.०० |
| ३४–भक्तिचन्द्रिका | ३०.०० |
| ३५–प्रमेयरत्नावली एवं नवरत्न | ५०.०० |
| ३६–वेदान्तस्यमन्तक | ४०.०० |
| ३७–तत्वसन्दर्भः | १००.०० |
| ३८–भगवत्सन्दर्भः | १५०.०० |
| ३९–परमात्मसन्दर्भः | २००.०० |
| ४०–कृष्णसन्दर्भः | २५०.०० |
| ४१–भक्तिसन्दर्भः | ३००.०० |
| ४२–प्रीतिसन्दर्भः | ३००.०० |
| ४३–दशःश्लोकी भाष्यम् | ६०.०० |
| ४४–भक्तिरसामृतशेष | १००.०० |
| ४५–श्रीचैतन्यभागवत | २००.०० |
| ४६–श्रीचैतन्यचरितामृतमहाकाव्यम् | १५०.०० |
| ४७–श्रीचैतन्यमंगल | १५०.०० |
| ४८–श्रीगौरांगविरुदावली | ४०.०० |
| ४९–श्रीकृष्णचैतन्यचरितामृत | १५०.०० |
| ५०–सत्संगम् | ५०.०० |
| ५१–नित्यकृत्यप्रकरणम् | ५०.०० |

| क्रम. सद्ग्रन्थ | मूल्य |
|---|---|
| ५२–श्रीमद्भागवत प्रथम श्लोक | ३०.०० |
| ५३–श्रीगायत्री व्याख्याविवृतिः | १०.०० |
| ५४–श्रीहरिनामामृत व्याकरणम् | २५०.०० |
| ५५–श्रीकृष्णजन्मतिथिविधिः | ३०.०० |
| ५६–५७–५८–श्रीहरिभक्तिविलासः | ६००.०० |
| ५९–काव्यकौस्तुभः | १००.०० |
| ६०–श्रीचैतन्यचरितामृत | २५०.०० |
| ६१–अलंकारकौस्तुभ | २५०.०० |
| ६२–श्रीगौरांगलीलामृतम् | ३०.०० |
| ६३–शिक्षाष्टकम् | १०.०० |
| ६४–संक्षेप श्रीहरिनामामृत व्याकरणम् | ८०.०० |
| ६५–प्रयुक्ताख्यात मंजरी | २०.०० |
| ६६–छन्दो कौस्तुभ | ५०.०० |

## बंगाक्षर में मुद्रित ग्रन्थ

| | |
|---|---|
| १–श्रीबलभद्रसहस्रनाम स्तोत्रम् | १०.०० |
| २–दुर्लभसार | १०.०० |
| ३–साधकोल्लास | ५०.०० |
| ४–भक्तिचन्द्रिका | ४०.०० |
| ५–श्रीराधारससुधानिधि (मूल) | २०.०० |
| ६–श्रीराधारससुधानिधि (सानुवाद) | ३०.०० |
| ७–श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| ८–भक्तिसर्वस्व | ३०.०० |
| ९–मनःशिक्षा | ३०.०० |
| १०–पदावली | ३०.०० |
| ११–साधनामृतचन्द्रिका | ४०.०० |
| १२–भक्तिसंगीतलहरी | २०.०० |

# गौशाला

आश्रम के अग्रभाग में एक बृहद् गौशाला है, जिसमें गोवंश की संख्या लगभग 171 है। यहाँ पर गाय की सेवा गाय के अनुकूल रूप में ही की जाती है न कि व्यवसाय की दृष्टि से। गाय श्रीकृष्णजी की भी पूज्य हैं जो कि उनकी भौमलीला से विदित है, उनको आदर्श मानकर ही यहाँ पर गाय की सेव्यरूप में सेवा की जाती है। गो-सेवा के लिए **'श्रीहरिदास गऊ संस्थान'** नामक ट्रस्ट की स्थापना की गयी है तथा तेहरा ग्राम श्रीवृन्दावन के निकट 11 एकड़ भूमि भी खरीदी गयी है, वहाँ पर एक और नवीन बृहद् गौशाला है। वृद्धावस्था में भी महाराजश्री स्वयं गो-सेवा करते हैं। इस आश्रम का वातावरण प्राचीन समय के ऋषिकुलों जैसा है। आश्रम में एक विराट् ग्रन्थागार भी है जिसमें प्रचुर प्राचीन मुद्रित एवं हस्तलिखित ग्रन्थ उपलब्ध हैं। आश्रम की एक **'प्रेस'** भी है जिसका नाम 'श्रीगदाधर गौरहरि प्रेस' है। इस प्रेस से अभी तक लगभग 80 सद्ग्रन्थों का संस्कृत, हिन्दी एवं बँगला भाषा में प्रकाशन हो चुका है।

---

मुद्रक :

**श्रीगदाधर गौरहरि प्रेस**

(श्रीहरिदास निवास)

प्राचीन कालीदह, वृन्दावन (मथुरा)

फोन : 0565-2442098, 2443965